# श्राद्धमार्तण्डस्य विषयानुक्रमः

॥ श्रीयाज्ञवल्क्यगुरुभ्यो नमः ॥

# श्राद्धमार्तण्डः



## १ अथ श्राद्धपरिभाषा ।



श्रीगणेशं गिरं नत्वा मार्तण्डं कुलदैवतं । पितरौ श्रीस्वप्रकाशसद्गुरूनपि संततं ॥१॥ योगीश्वरं याज्ञवल्क्यं कात्यायनमुनीनपि । मान्यान्कर्कमुखान्भाष्यकारानपि पुरातनान् ॥२॥ सूत्रं भाष्याणि मान्यानि कारिकाः परिशिष्टकं । धर्मशास्त्रनिबंधांश्च समालोक्य यथामति ॥३॥ काण्वस्तनोति मार्तंडसोमयाजी समासतः । काण्वद्विजकृते काण्वश्राद्धमार्तंडमुत्तमं ॥४॥

अथात्र भगवता महर्षिणा कात्यायनाचार्येण परिशिष्टे सूत्रितानां श्राद्धनामन्येषां चावश्यकानां स्मृत्यंतरोक्तानां प्रयोगाः संगृह्यंते । तत्रादाविह प्रयोगसौकर्याय प्राचीनानि स्मृतिवचनानि विविच्य तेभ्यः सारं संगृह्य संक्षेपतः परिभाषार्थे लिख्यते । अपरपक्षे श्राद्धं कुर्वीत । श्राद्धमिति कर्मणो नामधेयं । तत्र कर्कमते पिंडदानस्यैव श्राद्धमिति नामधेयं । ततश्च पिंडदानाकरणेऽभ्यावृत्तिः । पिंडदान

ब्राह्मणभोजनाग्नौकरणत्रयाणां कर्मणां समुदायस्येत्यन्ये ।
श्राद्धशब्दः स्फुटीकृतो ब्रह्मांडे "देशे काले च पात्रे च
श्रद्धया विधिना च यत् । पितॄनुद्दिश्य विप्रेभ्यो दानं श्राद्ध
मुदाहृतम् ॥ इति ॥ धर्मप्रदीपे च "यजुषां पिंडदानं स्यात्
बह्वृचां द्विजतर्पणम् । श्राद्धशब्दाभिधेयं स्यादुभयं साम
वेदिनाम् इति ॥ नित्यनैमित्तिककाम्यवृद्धिश्राद्धसपिंडीकरण
पार्वणगोष्ठीशुद्धिकर्मांगदैविकयात्रांगपुष्टीति भेदेन द्वादश
विधानि श्राद्धानि । तत्र पितृत्रयमातामहत्रयेति षड्देवतात्मकं
दैवहीनं अहन्यहनि क्रियमाणं श्राद्धं नित्यश्राद्धं ॥ एको
द्देशेन क्रियमाणं एकपिंडयुतं अदैवं यदेकोद्दिष्टश्राद्धं तन्नै
मित्तिकम् ॥ २ ॥अभिप्रेतार्थसिद्ध्ये यत् श्राद्धं क्रियते तत्का
म्यम् ॥ ३ ॥ पुत्रजन्मविवाहादौ क्रियमाणं सदैवं नवदैवत्यं
(श्री गदाधरदीक्षितादीनां मतेतु) षड्दैवत्यं(अनंताचार्यादीनां
मतेन) वा श्राद्धं वृद्धिश्राद्धं ॥ ४ ॥ मृतस्य द्वादशाहादि
काले पिंडार्घसंयोजनादिरूपं पार्वणैकोद्दिष्टरूपं यत्क्रियते,
तत्सपिंडीकरणं ॥ ५ ॥ पित्रादित्रयोद्देशेन सदैवं पिंडत्रययुतं
आब्दिकादौ क्रियमाणं श्राद्धं पार्वणं । इदं पार्वणं एक
पार्वणकाद्विपार्वणकात्रिपार्वणकभेदात् त्रिविधं । तत्र पित्रादे
र्मृततिथौ क्रियमाणं प्रतिसांवत्सरीकं एकपार्वणं ॥ महालया
न्वष्टक्यादिभिन्नानि अमावास्यादिषु क्रियमाणानि षण्णवति

श्राद्धांतर्गतानि श्राद्धानि द्विपार्वणकाणि ॥ षण्णवतिश्राद्धानि, अमा द्वादश, युगादयश्चतस्रः, मन्वादयश्चतुर्दश, संक्रांतयो द्वादश, वैधृतयस्त्रयोदश, व्यतीपातास्त्रयोदश, महालयाः षोडश पूर्वेद्युः श्राद्धानि चत्वारि, अष्टकाश्राद्धानि चत्वारि, अन्वष्टका श्राद्धानि चत्वारि, एवं संवत्सरेण षण्णवतिः श्राद्धानि भवंति । द्विपार्वणकश्राद्धेषु सपत्नीकपित्रादित्रयस्य सपत्नीकमातामहादित्रयस्य चैवोद्देशः । अन्वष्टकादिश्राद्धं त्रिपार्वणकं।अत्र पित्रादित्रयमात्रादित्रयमातामहादित्रयाणामुद्देशः ॥ महालयश्राद्धतीर्थश्राद्धयोः पार्वणश्राद्ध एवांतर्भावः॥ एते पार्वणैकोद्दिष्टरूपे । पित्रादिपार्वणत्रयस्य पत्न्याद्येकोद्दिष्टगणस्य चोद्देशात् ॥ अत्रपितरः पितृत्रयी, मातृत्रयी, सपत्नीकमातामहत्रयी, (शक्तौ मातामहीत्रय्यपि पृथक्कार्या) पत्नी, सुतः, सुता, पितृव्यः, मातुलः, भ्राता, (एते पितृव्यादयः सपत्नीकाः ससुता ग्राह्याः तत्र सपत्नीकः ससुत इत्यादि प्रयोगः) पितृष्वसा, मातृष्वसा, आत्मभगिनी, (एता अपि अपत्यभर्तृयुक्ताः, सभर्तृकाः ससुता इत्यादि प्रयोगः) श्वशुरः (श्वश्रूरपि ग्राह्येति स्मृतिचंद्रिकायां) गुरुः, शिष्याः, आप्ताः, (हितकर्ता) इति । अत्र सति विभवे स्वामि ऋत्विक्पोषकाचार्यजामातृद्रव्यदाः सापत्नमातृपित्राऽपीति श्राद्धमंजर्याम् ॥ ६ ॥ गोष्ठ्यां क्रियमाणं श्राद्धं गोष्ठी

श्राद्धं ॥७॥ शुद्धये क्रियमाणं श्राद्धं शुद्धिश्राद्धं ॥८॥ गर्भाधानपुंसवनसीमंतेषु आधाने सोमयागे च क्रियमाणं वृद्धि श्राद्धं कर्मांगं ॥ ९ ॥ देवानुद्दिश्य क्रियमाणं श्राद्धं दैविकं ॥१०॥ तीर्थयात्रादौ सर्पिषा क्रियमाणं श्राद्धं यात्रांगं ॥११॥ शरीरोपचये अर्थोपचये वा क्रियमाणं श्राद्धं पुष्टिश्राद्धं॥१२॥ एतेषां लक्षणानि ग्रंथांतरेषु विस्तरेण प्रोक्तानि । पार्वणैकोद्दिष्टवृद्धिसपिंडीकरणात्मकमिति चतुर्विधमेव मुख्यं तस्यैवायं प्रपंच इति ।

२ अथ श्राद्धदेशः। कुरुक्षेत्रप्रभासपुष्करप्रयागकाशी गंगायमुनानर्मदातीर नैमिषगंगाद्वारगयाशीर्षाक्षय्यवटादिषु श्राद्धकरणे महाफलं । तुलसीकाननच्छायाशालग्रामचक्रांकित सन्निधावपि कृतं श्राद्धमक्षय्यतां व्रजति । परकीयदेशांतारिक्षादिनिषिद्धदेशे श्राद्धं न कार्यं । परकीयगृहे प्रवासादिना श्राद्धप्रसक्तौ तद्गृहस्वामिने द्रव्यं दत्वा तदनुज्ञां वा संपाद्य कार्यं। एवं प्रशस्तदेशे कृमिकेशास्थिश्लेष्मास्थिवर्जितां रजस्वलादर्शनादिरहितां दक्षिणाप्रवणां भुवं गोमयेनोपलिप्य तत्र श्राद्धं कुर्यात् । श्राद्धदिने श्राद्धात्पूर्वं बालेभ्यो भोजन दानं अतिथिभ्यो भिक्षादानं गृहेरंगमालाकरणं कर्त्रा कंठे मालाधारणं गंधाद्यलंकरणं च न कार्यं। स्त्रियोऽपि मुक्तकेश त्वरोदनहसनाकारणभाषणादि न कुर्युः ।

३ अथ श्राद्धकालाः—तेच श्राद्धभेदाविमर्शनावसरे संक्षेपतः प्रोक्ताः अथापि स्फुटबोधायात्र पुनः कथ्यंते । अमावास्यायुगादिमन्वादिसंक्रांतिवैधृतिव्यतिपातमहालय पूर्वेद्युरष्टकान्वष्टकाः महातीर्थप्राप्तिः मृताहः ग्रहणद्वयं श्राद्धंप्रतिरुचिः श्रोत्रियादिब्राह्मणसंपत्तिः अर्धोदयकपिलाषष्ठ्याद्यलभ्ययोगाः ग्रहपीडाः दुःस्वप्नदर्शनं नवान्नप्राप्तिः नवोदकप्राप्तिः गृहप्रच्छादननिमित्तमिति श्राद्धकालाः । पद्मकयोगादयोऽन्येपि कालविशेषाः ग्रंथांतरेषु दृश्यंते। तेच तत एवावसेयाः ।

४ क्षयाहनिर्णयः॥ यस्मिन् मासपक्षातिथिस्पृष्टेऽहनि यः म्रियते, प्रत्यब्दं तं क्षयाहं तस्यावगंतव्यं ॥ तच्चाधिमासमृतानां प्रथमाब्दिकं त्रयोदशे मासे कार्यं। मध्ये यद्यधिमासो भवेत् तदा त्रयोदशे मासे कार्यं । यद्यंतेऽधिमासः तदा तस्मिन्नेवाधिमासे कार्यं। द्वितीयादिवार्षिकं तु शुद्धमास एव॥ अधिमासमृतानां तु यदा स एव मासोऽधिमासः स्यात्तदा तत्रैवाधिमासे कार्यं ॥

५ मृततिथ्यज्ञाने निर्णयः—प्रवासमरणादिना क्षयाहतिथेरज्ञाने तन्मासस्य कृष्णाष्टम्यां कृष्णैकादश्यां अमायां शुक्लैकादश्यां वा कार्यं । यदि तिथिर्ज्ञाता मासो न ज्ञातस्तदा मार्गशीर्षे माघे भाद्रपदे आषाढे वा तत्तिथौ कार्यं । तिथि

मासयोरविज्ञाने माघे मार्गे वा अमायां कार्यं । अथवा प्रस्थान दिवसमासौ ग्राह्यौ । तयोरपि तिथेरज्ञाने प्रस्थानमासे दर्शे कार्यं । तिथेर्ज्ञाने मासाज्ञाने तु मार्गशीर्षादौ । उभयस्याप्य विज्ञाने मृतवार्ताश्रवणकालिकौ तिथिमासौ ग्राह्यौ । तयोर-न्यातराज्ञाने प्रस्थानदिनमासवन्निर्णयः । एतयोरप्यविज्ञाने मार्गशीर्षे कार्यं ।

६ अथ श्राद्धारंभकालाः॥ अह्नः पंचदश मुहूर्ताः । तत्रा ष्टमो मुहूर्तः कुतुपसंज्ञकः । तत्रैव श्राद्धारंभः कार्यः । कुतु पादारभ्य मुहूर्तपंचकं श्राद्धकालाः । द्वादशो मुहूर्तो रौहिणः। तस्य लंघने महान् दोषः संभवति । नातस्तं लंघयेत् । एवं च उक्ते काले तिथेरसत्वेऽपि श्राद्धानुष्ठानं कार्यं । अत्र प्रसंगान्मनागिवतिथिद्वैधे विचारः । पार्वणश्राद्धं यस्यां तिथौ विहितं, सा चेद्दिनद्वयव्यापिनी तदा संपूर्णापराह्णव्या पिनी ग्राह्या । अपराह्णोनाम प्रातःसंगवमाध्याह्नापराह्णसा याह्नेतिपंचधाविभक्तस्य दिनस्य चतुर्थो भागः। यदि च दिन द्वयेऽपि संपूर्णापराह्णव्यापिनी तदा पूर्वा। दिनद्वयेऽपि अपरा ह्णव्याप्त्यभावस्तदाऽस्तात् प्राक्त्रिमुहूर्ता चेत्पूर्वा॥ तदभावे तु परैव। यदा दिनद्वयेऽपराह्णैकदेशव्यापिनी तदा यस्मि न्नहनि अधिकव्यापिनी सैव ग्राह्या ॥ दिनद्वयेऽप्यपराह्णैक देशव्याप्तौ तिथिक्षये पूर्वा वृद्धौ साम्ये च परेति बहवः ॥

साम्ये पूर्वेति हेमाद्रिः ॥ अत्र क्षयवृद्धी उत्तरतिथिगते ग्राह्ये ॥ न ग्राह्ये तिथिगते ॥ पिंडपितृयज्ञादिने सायाह्नेऽपि पार्वणं कार्यम् ॥ अनुज्ञातत्वात्। विघ्नवशाद्दिने दर्शमासिक सांवत्सरीकश्राद्धं रात्रावपि प्रथमप्रहरपर्यंतं कार्यम् । एको द्दिष्टे तु मध्याह्नव्यापिनी तिथिर्ग्राह्या ॥ अत्र मध्यान्ह शब्देन मध्यान्हैकदेशः ॥ कुतुपरौहिणाख्यो मुहूर्तद्वयात्मकः कालो गृह्यते ॥ कुतुपपूर्वभाग एवारंभः ॥ अत्रापि तिथेर्द्वै विध्ये पार्वणतिथिवन्निर्णयः ॥ दिनद्वये तुल्यैकदेशव्याप्तौ पूर्वैवेति कमलाकरः ॥ आमहेमश्राद्धयोस्तु पूर्वाह्णव्यापिनी तिथिर्ग्राह्या ॥ तिथिद्वैधे तु प्रागुक्त एव निर्णयः ॥

७ अथ श्राद्धेऽधिकारिणः । श्राद्धे साग्निकस्यैवाधि कारः॥ न निराग्निकस्येति कर्काचार्याः ॥ साग्निकनिरग्निक योर्नित्यं श्राद्धमिति गदाधरदीक्षितादयः ॥ तत्र माता-पित्रोः श्राद्धे औरसः पुत्रोऽधिकारी ॥ उपनीतपौत्रसत्वेऽ प्यनुपनीतपुत्रस्यैवाधिकारः पुत्रश्च न जन्मतोऽधिकारी ॥ किंतु वर्षोत्तरम् ॥ पूर्णत्रिवर्षस्याकृतचूडस्य स्वधोच्चारण मात्रेऽधिकारः ॥ न वैदिकमंत्रोच्चारेण ॥ कृतचूडस्य वैदिक मंत्रोच्चारणेऽपि ॥ औरसानां पुत्राणां अनेकत्वे ज्येष्ठ एवा धिकारी । ज्येष्ठस्याभावे असन्निधाने पातित्यादिनानाधि कारे वा ज्येष्ठानुजः । केचित्तु ज्येष्ठासन्निधानादौ कनी

ष्ठोऽधिकारीति वदंति ॥ अत्र मूलं चिंत्यं ॥ पुत्राभावे पौत्रः॥ तस्याभावे पौत्रः । तस्याभावे दत्तकः पुत्रः । स च और्ध्व देहिके उपनीतः ॥ अन्यत्र दर्शादावनुपनीतः ॥ तदभावे सपत्नीपुत्रः॥ तदभावे भर्तुः पत्नी॥ पत्न्याश्च भर्ता॥ पत्न्या भावे अविभक्तस्य सोदरः । भ्रातृतत्पुत्रसत्वे कनिष्ठश्च भ्रातैव। भ्रातुरभावे तत्पुत्रः। सहोदरभ्रातृतत्पुत्राभावे असोदरोभ्राता॥ तदभावे असोदरभ्रातृपुत्रः । विभक्तस्य तु दुहिता ॥ तत्रोढा नूढसमवाये ऊढैव । दुहितुरभावे दौहित्रः । तत्र दौहित्र भ्रातृपुत्रसत्वे विभक्तस्य दौहित्रः । अविभक्तस्य भ्रातृपुत्रः॥ तदभावे पिता ॥ पितुरभावे माता ॥ मात्रभावे स्नुषा । तस्या अभावे स्वसा । तस्या अभावे भागिनेयः ॥ तस्या भावे पितृव्यतत्पुत्रादयः सपिंडाः । तेषामभावे सोदकाः । तेषामभावे सगोत्राः ॥ तेषामभावे मातामहमातुलतत्पुत्रा- दयो मातृसपिंडाः । तदभावे स्वपितृस्वसृपुत्राः । तदभावे स्वमातृस्वसृपुत्राः । तदभावे पितुः पितृस्वसृपुत्राः । तदभावे पितुर्मातृस्वसृपुत्राः। तदभावे पितुर्मातुलपुत्राः। तदभावे मातुः पितृष्वसृपुत्राः । तदभावे मातुर्मातृष्वसृपुत्राः ॥ तदभावे मातुर्मातुलपुत्राः ॥ तदभावे शिष्यः ॥ तदभावे ऋत्विक्॥ तदभावे आचार्यः ॥ तदभावे जामाता ॥ जामातुः श्वशुरः॥ तदभावे सखा ॥ तदभावे कश्चिद्धनहारी । स च विप्रो

विप्रस्य । तदभावे धर्मपुत्रः ॥ अत्राभावो नाम असन्निधि-
र्नाशो वा ॥

८ अथ श्राद्धे पितरः । ते च श्राद्धभेदविमर्शनावसरे प्रपंचिता एव । मातृश्राद्धे विशेषः प्रोच्यते "क्षयाहं वर्जयित्वैकं स्त्रीणां नास्ति पृथक्क्रिया । केचिदिच्छंति नारीणां पृथक् श्राद्धं महर्षयः । अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि । अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह" । अपिच "स्वेन भर्त्रासमं श्राद्धं नारी भुंक्ते सुधासमं । पितामही च स्वेनैव तथैव प्रपितामही ॥ अत्र मातृशब्दो जनन्यामेव । तेन सापत्नमातृभ्यो न दद्यात् । एवं पितामहीशब्देन पितृजनन्यादय एवोच्यंते ॥ तत्सपत्नीभ्यो न देयं ॥ कारुण्येन महालयादौ देयं ॥

९ अथ विश्वेदेवाः--कर्मांगे, क्रतुदक्षसंज्ञकाः । वृद्धिश्राद्धे सत्यवसू ॥ काम्यश्राद्धे महालये च धूरिलोचनौ । नैमित्तिके (सपिंडीकरणे) नवान्नलंभनादौ अष्टकाश्राद्धे चकामकालौ सर्वत्र पार्वणश्राद्धे विनावचनं पुरूरवार्द्रवौ ॥

१० अथ श्राद्धे विप्राः--तेच श्रुतशीलवृत्तसंपन्ना ब्रह्मविदः सत्यभाषिण आहिताग्नयस्तत्सुता वा असमानगोत्रा असमानप्रवरा असंबंधिनश्चोत्तमाः ॥ मातामहमातुलो भागिनेयो दौहित्रो जामाता गुरुः शिष्यो याज्यः श्वशुरः ऋत्विक्शालकः

पितृष्वसृपुत्रा मातुलपुत्रोऽतिथिः सगोत्रो मित्रमिति मध्यमाः॥ दौहित्रजामातृस्वस्रीयादीनां विद्यादिगुणवतां श्राद्धे निमंत्रणाभावे दोषः ॥ गुणराहित्ये दोषोन । षट्पुरुषेभ्योर्वाक्सगोत्राः श्राद्धे न निमंत्रणीयाः । तत्परतोऽन्याविप्रा संभवे निमंत्रणीयाः । ऋत्विजः सपिंडाः संबंधिनः शिष्याश्च वैश्वदेवे नियोज्या नतु पित्र्ये । अन्येऽपि विगुणा विप्रा देवस्थाने योज्याः। द्विपद्रोगिहीनाधिकांगकृतघ्नज्योतिप नैच्य वृत्तिराजभृत्यगायकवेदाविक्रयिदेवलकदारसुतत्यागिकाणां धबधिरमूकपंगुखल्वाटकुनखिनटकृष्णदंतपतितव्रात्यजारकर्मनिरतशूद्रयाजकायाज्ययाजकश्मश्रुहीनजटिलक्लीबकुष्टिकुब्जवामनपुत्रहीनपरशाखोपनीतवार्धुषिकसर्वविक्रयचौरकर्मनिरतादयो वर्ज्याः । अत्र ग्राह्यविप्रत्वोक्तावेव तद्भिन्नानां वर्ज्यत्वसिद्धौ पुनर्वर्ज्यविप्रलिखनं वर्ज्यभिन्नानां निर्गुणानामपि विप्राणामसंभवे ग्राह्यत्वापेक्षया । श्रुतशीलादिगुणवत्त्वे कुष्ठित्वादिशरीरदोषाणां न दूषकत्वं। गयादौ निर्गुणा अपि विप्रास्तत्रत्या एव भोज्याः। एकस्मिन् श्राद्धे द्वौ भ्रातरौ पितृपुत्रौ च नैव भोज्यौ ॥

११ अथ विप्रसंख्या ॥ वैश्वदेवे समाः, पित्र्ये विषमाः, तेन वैश्वदेवे द्वौ, त्रयः पित्रे, इति पंच ॥ अथवा चत्वारो दैवे पित्र्ये पित्रादीनां प्रत्येकं त्रयस्त्रय इति त्रयोदश ॥

यद्वा पित्रादीनां प्रत्येकं पंच पंचेति एकोनाविंशतिः ॥ एवं दर्शादौ पार्वणाधिक्ये विप्राधिक्यं ॥ एवं च वैश्वदेवे द्वौ चतुरो वोपवेश्य पित्रादिषु प्रत्येकं एकं त्रीन् पंच सप्त वोपवेशयेदिति सारः ॥ अशक्तौ दैवे पितृपार्वणे चैकैक इति द्वौ विप्रौ ॥ द्वौ देवे पित्र्ये चैक इति पक्षो निर्मूलः । अशक्तौ पार्वणद्वयेप्येको विप्रः । एक एव विप्रश्चेद्वैश्वदेवे शिवलिंगं शालग्रामशिलां वा निधाय सर्वं श्राद्धं समाचरेत् ॥ महालयादौ शक्तौ देवे द्वौ पार्वणत्रयार्थं प्रत्येकं त्रीनित्येवं नव पत्न्याद्येकोद्दिष्टगणे प्रतिदैवतमेकैकमिति विप्रान्निमंत्रयेत् ॥ अशक्तो दैवे एकं प्रतिपार्वणमेकैकमिति पार्वण त्रये त्रिन् सर्वैकोद्दिष्टगणे एकं इति विप्रान्निमंत्रयेत् ॥ दैवे विप्रद्वयसंभवे प्रतिपार्वणं त्रय एव विप्राः । नतु दैवे द्वौ प्रतिपार्वणं एक इति वा । प्रतिपार्वणं त्रीन् देवार्थमेक इति वैषम्यं न कार्यं । दैवे न्यूनवयस्काः । पित्रादिषु यथोत्तरं वृद्धवृद्धतरवृद्धतमाः । मातुः श्राद्धे सुवासिन्योऽपि भोजनीयाः ॥

१२ अथ विप्रनिमंत्रणं । तच्च श्राद्धदिनात्पूर्वेद्युः सायंतनकृत्योत्तरं भुक्तवत्सु द्विजेषु कार्यं । श्राद्धदिने वा प्रातराह्निकोत्तरं । श्राद्धार्थं समनुप्राप्तान्भूयो विप्रान्निमंत्रयेदिति पृथ्वीचंद्रोदये नारदस्मरणात् श्राद्धार्थं निमंत्रितानां

विप्राणांगृहागमने चेति वारत्रयं विप्रनिमंत्रणं भवति ॥

श्राद्धे यजमानस्य विप्राणां च नियमः । तेच मनोवाक्कर्मभिरहिंसा निमंत्रितब्राह्मणापरित्यागः तांबूलक्षुरकर्माभ्यंजनदंतधावनपरित्यागश्चेति यजमानस्य। निमंत्रणमभ्युगम्यानपक्रमणं अन्यत्रभोजनं एकत्र निमंत्रितस्यान्येषामन्नादेरग्रहणं आहूतस्यकृतपकालाद्यनतिक्रमणं इति विप्राणां । निमंत्रणादुपरि श्राद्धान्तव्यतिरिक्तभोजनासत्यत्वादिताशौचमत्वारितत्त्वमृतौ स्वदारेष्वपि नियुक्तस्यापि मैथुनाकरणं । विशेषतः शूद्रायाः परिहरणं । श्रमस्वाध्यायक्रोधक्रौर्यकलहद्यूतभारोद्वहनप्रतिग्रहप्रमाद मदमोहलोभाहंकारकार्पण्यस्तेयवर्जनमित्युभयेषां नियमाः ॥

दैवपूर्वकत्व विचारः । दैवपूर्वं श्राद्धमिति पारिशिष्टे । मनुयाज्ञवल्क्यादिभिः निमंत्रणादिपदार्थजातंसर्वं दैवपूर्वमित्युक्तं । विसर्जनं तु पितृपूर्वकमिति । सूत्रकारमते दैवपूर्वं श्राद्धमिति सूत्रणान्निमंत्रणादिविसर्जनांतं पदार्थजातमखिलं दैवपूर्वमिति । धर्मप्रदीपेऽपि । विसर्गश्चोल्कश्चाग्नौकरणं पंक्तिवारणं । करशुद्धिरपोशानं पितृपूर्वाणि पद सदा । इति। विसर्जनं प्रश्नः प्रदक्षिणा भुंक्ते चाचमनमिति पितृपूर्वाणीति स्मृत्यंतरे । अन्यत्र हस्तोच्छिष्टापनयनं आह्वानं विसर्जनं दक्षिणां सौमनस्यं चेति पितृपूर्वाणीत्युक्तं।

१३ सव्यापसव्यादिविचारः-दैवे यज्ञोपवीतिता, उदङ्मुखता, दक्षिणजानुनिपातः, दैवतीर्थं, प्रदक्षिणता, उदगपवर्गता दर्भाणां प्रागग्रता चेत्यादयो धर्माः। पित्रे तु प्राचीनावीतिता, दाक्षिणाभिमुखता वामजानुनिपातः, पितृतीर्थं, अप्रदक्षिणता, दाक्षिणापवर्गता, दर्भाणां दाक्षिणापवर्गतेत्यादयाः।

अत्र प्रसंगाद्देवपित्र्यादिविचारः संक्षेपतः। श्राद्धकर्मण्यस्मिन् पित्र्यं दैवं उभयात्मकं लौकिकं चेति चतुर्विधं कर्म। तत्र स्वधावाचनादि पित्र्यं, विश्वेदेवाः प्रीयंतामित्यादि दैवं। संकल्पवाक्यं, नीवीबंधः, गायत्रीमधुवातादि जपः, शेषान्नविनियोगः, अनुव्रजनं, चैवमादीनि उभयात्मकानि। अन्नपरिवेषणं, अतिथिभोजनं, ब्राह्मणप्रदक्षिणीकरणं, अद्यमे सफलं जन्मेत्यादि उच्छिष्टोद्वासनं चेत्येवमादीनि लौकिकानि पित्र्ये उभयात्मके च कर्मणि प्राचीनावीतिता, दैवे लौकिकेच यज्ञोपवीतिता।

१४ प्रश्नप्रतिप्रश्नविचारः—प्रश्नेषु पंक्तिमूर्धन्यं पृच्छति सर्वान्वा। आद्यपक्षे "यं प्रतिप्रश्नस्तस्यैव प्रतिवचनमिति नियमोक्तत्वात् पंक्तिमूर्धन्यस्यैव प्रतिप्रश्नः। द्वितीये तु सर्वेषां॥

१५ संबधाद्युच्चारविचारः-उच्चारे, संबंधो नाम गोत्रं रूपमिति क्रमः। श्राद्धकाशिकादौ, गोत्रसंबंधनामानीति

भृगुव्यासयोगियाज्ञवल्क्याः । एवं च संबधाद्युच्चारे विकल्पः अनंतदेवपादास्तु योगियाज्ञवल्क्यस्य वाजसनेयित्वात तच्छाखाध्येतृणां गुरुत्वाच्च कातीयानां गोत्रादिक्रम एव साधीयान् इत्याहुः । एनमेव पक्षमंगीकृतवंतः श्रीरामवाजपेयिढौंढुवैद्यनाथमिश्रगदाधरदीक्षितप्रभृतयः । शर्मांतं नाम ब्राह्मणस्य ग्राह्यं इति बौधायनः । स्त्रीणांतु नाम दांतं ज्ञेयं॥ यथा पार्वती दा इति । केचिद्देविशब्दांतमाहुः । यथा पार्वती देवी इति । अन्येतु उभयांतमाहुः । यथा पार्वतीदेवीदा इति ॥ गोत्रशब्दोच्चारणं मकारेणसमन्वितं कार्यमिति काशिका । गोत्रस्यापरिज्ञाने काश्यपं गोत्रं ग्राह्यमितिसिंधौ । नाम्नामज्ञाने पितृपितामहप्रपितामहत्येव ब्रूयादित्याश्वलायनः ॥ वसुरुद्रादित्यरूपेति रूपोच्चारे क्रमः इति काशिका। संकल्पो निमंत्रणं पाद्यं आसनं आवाहनं अर्घ्यदानं गंधाद्याच्छादनांतोपचारः अन्ननिवेदनं अवनेजनं पिंडदानं प्रत्यवनेजनं अक्षय्यं स्वधावाचनं चेति संबंधाद्युच्चारे स्थलानि तत्र विभक्तिविचारः, संकल्पे आसने अक्षय्ये षष्ठिविभक्तिः। आवाहने द्वितीया । अन्नदाने चतुर्थी । पिंडदाने संबुद्धिः, त्यागे चतुर्थी । शेषेषु संबुद्धिः ।

१६ आचमनविचारः–श्राद्धारंभे द्विराचमनं, विप्रपादप्रक्षालनांते स्वपादप्रक्षालनपूर्वकं द्विराचमनं, देवार्चनांते पित्रर्च

नांते चैकैकमाचमनं विकिरदानांते द्विरेकंवा आघ्राणांते सकृत् श्राद्धांते स्वपादप्रक्षलनपूर्वकं द्विः । केचित्तु, भस्ममर्यादांते करशुद्ध्यंते उच्छिष्टचालनांतेऽपि सकृत्सकृदित्याहुः । भोक्तुस्तु, मंडलादुत्तरतः पादशौचांते द्विः पाणिहोमांते सकृत् भोजनांते द्विरिति । आचमनामिह स्मार्तं ग्राह्यं इति श्राद्धमंजर्यां । पवित्रधारणोत्तरमेवाचमनम् ॥

१७ दर्भादिविचारः-समूलाः सकृदाच्छिन्नावा स्निग्धाः पुष्टा निर्दोषा दर्भा ग्राह्याः। हरिता अतिप्रशस्ताः । तेच पित्र्ये द्विगुणाः । वैश्वदेवे ऋजवः । दैवे पित्र्येच पवित्रपाणिनासीनेन देयाः । पवित्रपाणिरित्यत्र पवित्रं नाम ब्रह्मग्रंथिसमन्वितं दर्भद्वयात्मकं दर्भचतुष्टयात्मकं वा । दर्भत्रयात्मकमिति केचित्तत्र मूलं मृग्यं । ब्रह्मग्रंथिलक्षणं द्विगुणीकृतानां दर्भशिखानां पाशः प्रादक्षिण्येन समग्रवेष्टनं विधाय पुरोभागेन प्रवेश्यते चेद्ब्रह्मग्रंथिरिति हेमाद्रौ । अत्रकर्मणि हस्तद्वयेऽप्यनामिकयोः पवित्रधारणं कार्यमिति चंद्रिकायां । वामहस्ते दर्भधारणं नकार्यमिति संग्रहे ॥

पवित्रत्यागकालः-श्राद्धारंभे धृतान् दर्भान् पाद्यांते च विसर्जयेत् । ततो देवार्चनांते, पित्रर्चनांते, विकिरदानांते आघ्राणांते श्राद्धांते च पूर्वपूर्वधृतदर्भान् त्यजेत् । पित्रर्चनांते दर्भत्यागो न दृश्यते ॥

१९ श्राद्धे मंत्रादौ–प्रणवर्षिदेवताच्छंदोविनियोगानां स्मरणं नैव कार्यमिति प्रयोगपारिजाते ।

२० संकल्पविचारः—देशकालाद्युच्चारपूर्वकं संकल्पः। स च विप्रोपवेशनांते कार्यः ॥ केचिदेतं द्विवारमिच्छंति ॥ अस्मिन्पक्षे, निमंत्रणोत्तरं प्रथमः, विप्रोपवेशनांते द्वितीयः॥ अन्येतु त्रिवारमाहुः ॥ अत्रपक्षे निमंत्रणात्पूर्वं प्रथमः निमंत्रणोत्तरं द्वितीयः विप्रोपवेशनांते तृतीयः ॥ अत्र पक्षत्रयेऽपि विप्रोपवेशनांते श्रूयमाणः संकल्प एव प्रधानः ॥

२१ पाद्यमंडलं- तच्च गृहद्वारसमीपेंऽगणे गोमयगोमूत्राभ्यां चतुरस्रं द्विहस्तं प्रादेशमात्रं वोदक्प्लवं दैवे,तद्दक्षिणतः षडंगुलांतरे च वर्तुलं चतुर्हस्तं वितस्तिमात्रं वा दक्षिणाप्लवं पित्र्ये इति धर्माब्धिसारे॥अरत्निमात्रं देवानां हस्तमात्रं पितृणां इति संस्कारगणपतौ॥श्राद्धकर्मणि बाहुमात्रं मंडलमिति ढौंढुमिश्रपद्धतौ । पादप्रक्षालनोदकाचमनोदकसंसर्गो न कार्यः ॥

२२ आसनानि—सौवर्णराजतताम्रदुकूलकंबलदारुज (श्रीपर्णीजंबूकदंबाम्रबकुलशर्माश्लेष्मातकशालवृक्षज)तृणपर्णमयानिप्रशस्तानि॥आसनेषु आसनं दद्याद्वामे वा दक्षिणेऽपि वा॥ पित्र्यकर्मणि वामे च दैवे दद्यात्तु दक्षिणे इति ब्राह्मवचनात्सौवर्णाद्यासनोपरि दैवे प्रागग्रं दर्भद्वयं पित्र्ये दक्षिणाग्रमेकैकं दर्भं स्थापयेत् । दैवे चत्वारो दर्भा इति ग्रंथांतरे ॥

दैविकविप्रानेकत्वे संज्ञकानां विश्वेषां देवानामिदमासन-मित्येकस्मै दत्वा पुनरन्यस्मा एवमेवदद्यात् ॥ अग्रे सर्वत्रैवं प्रयोगः ॥ पित्र्ये आसने दर्भाः पंच सप्त वेति क्वचित् ॥

२३ नीवीबंधः—सच पिंडपितृयज्ञे विहितः ॥ तथापि पिंडपितृयज्ञवदुपचार इति पारिशिष्टे अतिदेशसूत्रणात्सांव-त्सरीकादौ सर्वत्र प्राप्तः । नीवीबन्धः पित्र्ये कर्माणि दक्षिण भागे कार्यः ॥

२४ अथार्घावर्चरिः—तत्रार्घपात्राणि सौवर्णराजतताम्र-खड्गमणिमय(शंखशुक्तिस्फटिकसंभव) पात्राणि प्रशस्तानि । अलाभे चैतेषां पलाशादियज्ञीयवृक्षपत्रपुटानि ग्राह्याणि ॥ दशांगुलं दैवपात्रं अष्टांगुलं पैत्र्यमिति श्राद्धमंजर्यां ॥ वैश्व देवस्थाने विप्रस्यैकत्वे द्वित्वादौ वा एकमेवार्घपात्रमासाद्य तमेवार्घपात्रं सर्वेभ्यो दद्यात् ॥ इति सिंधौ कमलाकरः कर्काचार्याश्च । विप्रसंख्यया पात्राणि इति केचित् । चंद्रि-कादौ पात्रद्वयमित्युक्तं ॥ पित्र्ये पितृसंख्यया पात्राणि ॥ विप्रैकत्वे प्रतिदैवतमेकैकमर्घपात्रमासाद्य पृथक्पृथक्देवतो-द्देशेन सर्वानर्घान् दद्यात् ॥ एकैकस्यैकैकविप्रसंभवे एकै-कस्मै एकैकमर्घपात्रं दद्यात् ॥ पितुःस्थाने विप्रानेकत्वे तमेवार्घं मंत्रावृत्या प्रतिविप्रं दद्यात् ॥ एवं पैतामहादावपि। दैवार्घपात्रे दर्भद्वयात्मकं पवित्रं । पित्र्ये दर्भत्रयात्मकं ॥

एकोद्दिष्टे एकमर्घपात्रं एकदर्भात्मकं पवित्रं च । अत्र देवावाहनोत्तरं यवावकिरणं दैविकार्घ्यपात्रे यवप्रक्षेपणंच सूत्रेऽनुपदेशान्नकार्यं किंतु तिलावकिरणं तिलानामेवप्रक्षेपणं कार्यमिति कर्काचार्याः यवैरन्वकीर्येति याज्ञवल्क्यवचनाद्य-वावकिरणं यवप्रक्षेपंच बहवः कुर्वंति । जलप्रक्षेपादौ प्रतिपात्रं मंत्रावृत्तिः कार्या ॥ अर्घदानं हस्तेनैव कार्यं। अर्घदानेऽपि मंत्रावृत्तिः ॥ पात्रलग्नावशिष्टोदकादिसंस्रवान् प्रपितामहपात्रगतं पितामहपात्रे, पितामहपात्रगतं पितृपात्रे, समवनीय तत्पात्रं पितृद्विजवामपार्श्वे पवित्रोपर्यधोमुखं स्थापयेत् ॥ दर्शादावपि प्रागुक्तक्रमेण पितृपात्र एव सर्व-संस्रवसंग्रहः कार्यः । देवादिसर्वपात्राणां संस्रवप्रक्षेपः पितृपात्र इति श्राद्धकाशिका । पितृपात्रे संस्रवान् समवनीय पुत्रकामेन मुखाभ्यंजनं कार्यं । न्युब्जीकृतं पात्रं गंधतिल यवपुष्पैः संपूज्य तदुपरि कुशत्रयं स्थापयेत् ॥ केवलकुशत्रय स्यैव स्थापनमिति काशिकादिषु ॥

२५ अत्र प्रसंगान्मनागेव कांडानुसमयपदार्थानुसमय-योर्विचारः प्रदर्श्यतेः—तत्र निमंत्रणादिसर्वपूजाकांडं दैवं समाप्य पैतृकं निमंत्रणादि पूजाकांडं आरभेदिति कांडानु समयः ॥ तत्तन्निमंत्रणं तत्तत्पाद्यमिति एकैकं पदार्थं सर्वेषां निर्वाह्य द्वितीयादिनिर्वाहः कार्यं इति पदार्थानुसमयः गदा-

धरादिभिः भाष्ये पदार्थानुसमय एव प्राशस्त्येन निर्णीतः ॥ यथा याज्ञवल्क्यस्मृतौ, आवाहनार्घपूरणदानानां यद्यपि कांडानुसमयः प्रतीयते । तथापि पदार्थानुसमयो बोद्धव्यः ॥ तुल्यसमवाये सामान्यपूर्वमानुपूर्व्ययोगादिति परिभाषितत्वात् ॥ अस्यार्थः—तुल्यानां समानानां समवाये एकप्रयोगानुष्ठाने यत्साधारणं अंगजातं तत्सर्वेषां पूर्वं भवति ॥ तथा सत्यानुपूर्व्येण पदार्थाः कृताः भवंति । यथा श्राद्धे पित्रादिषड्यागाः एकत्र प्रयोगे क्रियंते । तत्र निमंत्रणादयः सर्वेषां क्रमेण पदार्था अनुष्ठिता भवंति ॥ अन्यथा एकैकस्य पित्रादेः सर्वयागस्य परिसमाप्तौ द्वितीयोपक्रमे प्रक्रमभंगः स्यात् ॥ प्रथमस्य विसर्जने द्वितीयस्यामंत्रणमापद्येत ॥ तथा सत्यानुपूर्विभंगः प्रसज्येत । तच्च निषिद्धं ॥ तस्मादेकैकं पदार्थजातं सर्वेषामपि निर्वाह्य द्वितीयादिनिर्वाहः कार्यः ॥ एवमपि बहुभिः पदार्थैर्व्यवधानं भवति । तच्च न दोषाय ॥ नहि सजातीयैर्व्यवधानमिष्यते ॥ तस्मात्सर्वेषां निमंत्रण पाद्यादि ॥ एवमावाहनेऽपि आवाहनावकिरणजपसमुदाय रूपं ॥ जपेऽप्यायंतुन इति मंत्रलिंगात् । अत एव हि एकोद्दिष्टतीर्थश्राद्धनित्यश्राद्धसांकल्पिकश्राद्धेषु आवाहनादिनिवृत्तौ त्रयमपि निवर्तते कात्यायनस्य पदार्थानुसमय एवाभिमतः । देवावाहनानंतरं पित्रावाहनोक्तेः ॥ एकैकस्मिन्नप

आसिंचतीति सर्वपात्रेषु जलप्रक्षेपावगमात् ॥ तदनंतरं एकै-
कस्मिन् एव तिलानावपतीति विधानात् ॥ अत एकैकत्रा
र्घपात्रे जलादिपुष्पांतं प्रक्षिप्यार्घदानांतं वा निर्वर्त्य पात्रांतर-
पूरणमिति मतं न युक्तं ॥ किंच पदार्थानां क्रमानुरोधादपि
पदार्थानुसमय एवार्हति ॥ अतो निमंत्रणादावपि पदार्थानु
समय एव ।

२६ अथोपचारविचारः-चंदनागरुकस्तूरिकायक्षकर्दमकेशर
कर्पूरादयो गंधाः प्रशस्ताः ॥ तुलसीभृंगराजदूर्वायवांकुरादि
पत्राणि॥ पद्मोत्पलमल्लिका यूथिकाशतपत्रचम्पकानि अन्यानि
च गंधरूपसंपन्नानि श्वेतानि पुष्पाणि प्रशस्तानि ॥ श्रीखं-
डागरुकर्पूरदेवदार्वादिरमधूपः ॥ घृतमधुसंयुक्तं गुग्गुलं प्रश
स्ततरं ॥ घृतयुक्तस्तिलतैलयुक्तोवा दीपः ॥ शुक्लं शुद्धमहतं
सदशं वस्त्रं कौशेयं कार्पासं दुकूलं वा दद्यात् ॥ अत्र यज्ञो
पवीतदाने फलबाहुल्यं ॥ वस्त्राभावे तन्मूल्यं उत्तरीयं यज्ञो
पवीतं वा देयमिति स्मृत्यर्थसारे ॥ दैवे देवतीर्थेनोपचार
दानं द्विर्द्विः । गंधदानं अनामिकया मध्यमया वा । पित्र्ये
उपचाराणां त्रिस्त्रिर्दानं पितृतीर्थेन । गंधदानं तर्जन्या। दैवे
द्विर्द्विर्दानं पित्र्ये त्रिस्त्रिरिति नियमो गंधमाल्यादीनां दाने।
नतु पाद्यादीनां । पाद्यादीनामपि सर्वेषामप्ययं नियम इति
केचिद्वदंति । तदसमंजसमिति श्राद्धमंजर्यां । अत्र गंधादि

पूजनावसरे आद्यंतयोरपो दद्यात् ।

२७ विप्रभोजने मंडलं—नैवारचूर्णेन गौरमृत्तिकया भस्मना गोमयेन वारिणा वा दैवे चतुरस्रं पित्र्ये वृत्तं मंडलं कुर्यादिति सिंधौ श्राद्धमंजर्यां । दैवे पित्र्ये च चतुरस्र मेव मंडलमिति गदाधरवैद्यनाथरामकृष्णादयः ॥

२८ भोजनपात्राणि—तानि सौवर्णराजतकांस्यमयानि प्रशस्तानि।तदलाभे पलाशपत्रमधूकपत्रनिर्मितानि । तेषामप्य लाभे कुटजोदुंबरप्लक्षचूतपनसजंबूपुन्नागचंपकपत्रनिर्मितानि॥ कांस्यपात्रं निषिद्धमिति पृथ्वीचंद्रोदये । ग्राम्यकदलीपत्राणि निषिद्धानीति हेमाद्रौ ॥ प्रशस्तानीति स्मृतिसंग्रहे । उक्तानुक्त ग्रहणाद्विकल्प इति श्राद्धमंजर्यां । कदलीपत्रनिषेधेऽपि फला द्याहरणे न दोष इति श्राद्धकमलाकरः । घृतादिद्रवद्रव्यार्थं पात्राणि भोजनपात्राद्बहिः स्थापनीयानि ।

२९ पंक्तिवारणं--तच्च पित्र्ये पात्रं परितो नैर्ऋतीमारभ्य नैर्ऋतीपर्यंतं अप्रदक्षिणं वेष्टनरूपम् ॥ दैवे ऐशानीमारभ्यै शानीपर्यंतं प्रदक्षिणं वेष्टनात्मकं । इदं करशुद्धेः पूर्वं कार्य मिति मात्स्ये । इदंतु आश्वलायनानां विषयं । वाजसनेयि नां करशुद्धेरनंतरमेव पंक्तिवारणमिति ढौंढुमिश्रादिपद्धतिषु । पंक्तिवारणमावश्यकं । अन्यथा दोषस्मरणात् ॥

३० अथाग्नौकरणं--अग्नौकरणहोमोऽयं साग्निनाऽऽवस

थ्येऽग्नौ कार्यः । अग्न्यभाव [illegible]विप्रपाणौ नतु लौकिकाग्नौ । अत्राग्न्यभावः, प्रागभावः प्रध्वंसाभावः सन्निधानाभावः अधिकाराभावः अत्यंताभावश्चेति भेदात्पञ्चविधः तत्र विवाहात्पूर्वं प्रागभावः ॥ तदूर्ध्वमाहितस्याग्नेः प्रमादादिना नाशे सति पुनराधानात्पूर्वं प्रध्वंसाभावः ॥ देशभ्रंशादनवकाशेऽरणिसमारोपणादौ कृते सन्निधानाभावः। अशुद्धद्रव्यादिस्पृष्टेऽग्नौ प्रायश्चित्तं विनाऽधिकाराभावः । नैष्ठिकब्रह्मचर्यस्त्र्यभावेन अत्यंताभावः । तत्राग्नेः प्रागभावेऽत्यंताभावे चाग्न्यभावादग्नौ होमाभावः ॥ प्रध्वंसाभावाधिकाराभावयोश्चावश्यकविधौ सांकल्पिकमेव श्राद्धं । तत्र नाग्नौकरणं॥ सन्निधानाभावे त्वावश्यक श्राद्धे साग्नेरपि द्विजहस्त एवाग्नौकरणं ॥ आलस्येन नास्तिक्यादिना वा योऽग्निंत्यजति तस्यैकोद्दिष्टपार्वण सपिंडीकरणादि सर्वश्राद्धेष्वनधिकारोऽतस्संकल्प्य भोजयेत् ॥ तद्व्यतिरिक्तस्य त्यक्ताग्नेरग्न्यसन्निधानेऽपि सांगपिंडश्राद्धेऽधिकारः । ततश्च हस्तेऽग्नौकरणमिति संकल्पयेत् । एवञ्चाग्नौकरणहोमोऽयं न लौकिकाग्नौ भवति ॥ केचित्तु, विधुरादीनामग्नौकरणं इध्माधानाज्यभागपूर्वकं विहितमिति वदंति ॥ अत्राग्न्यभावे विप्रपाणाव ग्नौकरणमित्युक्तं॥ तत्किं दैव विप्रपाणावुत पित्र्यविप्रपाणौ॥ उभयथा स्मृतिषु नैकवचनदर्शनात् । एवं विप्रतिपत्तौ

केचित्तु दैवपित्र्यकरयोर्विकल्प इत्याहुः । अन्येतु साग्निः पितृकरे निरग्निर्दैवकरे इति व्यवस्थामाहुः । नैतद्द्वयमपि विचारसहम् । तत्र साग्नेरग्न्यसन्निधानादौ हस्तेऽग्नौकरणं विहितं अनुकल्पविधित्वेन पित्र्यद्विजहस्त एव विहितत्वात् । द्वितीयेतु श्राद्धविशेषत्वेन हस्तेऽग्नौकरणस्य व्यवस्थितत्वा दसार्वत्रिकत्वाच्च । अपिच पिंडपितृयज्ञवदित्यातिदेशेन प्राची नावीतितादिधर्मप्राप्तौ तद्धर्मानुपपत्तेः॥तस्मत्साग्नीनां अग्न्य सन्निधानादौ काम्याभ्युदयाष्टमीसपिंडीकरणश्राद्धेषु पित्र्य द्विजहस्ते आन्वष्टक्यपूर्वेद्युर्दर्शपार्वणश्राद्धेषु अग्नाविति सिद्धं ॥ एवञ्चाहिताग्नेः सर्वाधानपक्षे दाक्षिणाग्नौ अर्धाधाने औपासने स्मार्ताग्नेः सत्यग्नौ तत्रैव ॥ निरग्नीनां पित्र्यद्विज हस्त एवेति निर्णयः सारः । मृतभार्यस्यापत्नीकस्य देवद्विज होम इति धर्माब्धिसारे । शाखांतरीयविषयमिति केचित् ॥ अग्नौकरणंहोमस्य पित्र्यधर्मेण विधानात् । दैवे तद्धर्मानुप पत्तेश्च । द्विजाभावे,अजकर्णे अश्वकर्णे गोष्टे ।शिवालये जले वा कार्यं । जलेऽग्नौकरणं तीर्थश्राद्धविषयं । अग्नौकरणहोमः अपसव्येनैव । पाणिहोमे अनुज्ञावचनेन स्त इति गदाधर दीक्षिताः । अनुज्ञावचनकरणपक्षे प्रश्नस्तु सव्येनैव भवति॥

३१ हुतशेषदानं—तत्रानुल्लेखात्साधारण्याद्दैवे पित्र्ये च देयमिति कर्काचार्याः । कल्पतरुहेमाद्रिमिताक्षराकाराणां

मते पित्र्य एव । हुतशेषं पूर्वं दैवे दत्वा पश्चात्पित्रे दद्यात् ।

३२ परिवेषणं—तच्च देवपूर्वं घृताभिघारितेषु पात्रेषु स्वयं पत्नी वान्यो वा कुर्यात् अयं देवपूर्वपरिवेषणनियमः प्रथमपरिवेषण एव । ओदनं पायसं भक्ष्यं व्यंजनादि घृतं सूपमिति प्रथमपरिवेषणक्रमः । तत्र मध्ये अन्नं, दक्षिणे घृतपायसं, पुरतः शाकादि, वामे भक्ष्यभोज्यं इति । घृत परिवेषणे पितृपूर्वकत्वमिति कश्चित् । यावत्पर्यंतमन्नमुष्णं भवेत् तावद्देयं । विप्राय प्रेताय कर्त्रे वा यन्निषिद्धातिरिक्तं रोचते तद्देयं । लवणं साक्षान्नदेयं । अन्नादिसर्वं दर्व्या पात्रेण च परिवेषणीयं । न तु हस्तेन । अपक्वं तैलपक्वं च हस्तेनैव । भोजनपात्रे तिलानदेयाः । पंक्तौ विषमदानं न कार्यं ।

३३ अन्नानि—व्रीहियवमुद्गशामाकनीवारप्रियंगुमाष-तिलचणकयावनालवेणुयवगोधूमादिनिर्मितोदनपक्वान्नपर-मान्नभक्ष्यभोज्य पूरिकाकृसरपायसादीनि प्रशस्तानि तानि च तैलपक्वानि स्निग्धान्युष्णान्यतिप्रशस्तानि । अढकय-राजमाष मसूराकोद्रव निष्पावमारिषगवेधुक्शतपुष्पाराजस-र्षपवनमुद्गकुलित्थादीनि तिलमुद्गमाषातिरिक्तानि सर्वाणि कृष्ण धान्यानि च निषिद्धानि । यावनालचणकादीनि निषि द्धानि केचित् । विहितनिषिद्धानां विकल्प इति सिंधुः ।

धानाः पृथुका लाजाश्च शर्करा क्षीरसंयुक्ताः प्रशस्ततराः।

३४ शाकानि—कालशाक तंडुलीय फल्गु वास्तुक पनस कोशातकी कंदल बृहतीफल दीर्घश्वेतमूलक कुस्तुंबरी शीत-कंदल्यादीनि फांजीचूकाद्यारण्यकानि च प्रशस्तानि। कूश्मांड शिग्रुंवशाग्र कृष्णकर्कटी पारिभद्रच्छत्राकादीनि वर्ज्यानि। अलाबु पटोल पिंडालकादीनां विहितप्रतिषिद्धत्वाद्विकल्पः। वृत्तालाबुनिषिद्धमेवेति सिंधौ। श्वेतवृंताकं निषिद्ध मिति हेमाद्रिः। तेन कृष्णस्यापि निषेध इति चांद्रिकामधवौ कृष्णस्यापि निषेध इति कमलाकरः।

३५ फलानि—कदलीफलाम्रबदरपनसामलक दाडिम-खर्जूरद्राक्षाप्रियालबीजपूरबिल्वकपित्थनारिकेलादीनि प्रश-स्तानि। करीरविडङ्गजंबीरजंबूकरमर्दशेलुतुंडीफलकालिंगा-दीनि लोमशानिच फलानि निषिद्धानि। बिल्वकपित्थनारि केलादीनि निषिद्धानीति केचित्। विहितनिषिद्धत्वाद्विकल्प इति मंजर्यां। रक्तं बिल्वं निषिद्धमिति तत्रैव।

३६ मूलानि—आर्द्रकदारु हारिद्रादीनि श्वेतमूलानि च प्रशस्तानि। गाजरादीनि रक्तमूलानि निषिद्धानि। कंदाः सूरणादयः प्रशस्ताः। पलांडुलशुनगृंजनादयो निषिद्धाः। गृंजनं पलांडुभेदइति सिंधौ। लशुन भेद इति ग्रंथांतरे।

३७ अन्ये च विहितनिषिद्धाः पदार्थाः—भरुंडकशृंगा-

टकादीनि जलजानि इक्षुदंडः, शुंठी, पिप्पली, मरीचानि, सर्षपद्रवो, मधु, महिषीघृतं, सर्वे गोरसाः, हिंगुकर्पूरजीरक लवंगैलापत्रकादीनि, इक्षुविकाराः शर्करागुडादयः, सैंधवं सामुद्रं च लवणं इति प्रशस्तानि ॥ कपिलाया गोरसः प्रशस्ततरः । माहिषीक्षीरं, आविकं पयः, लोहितावृक्ष-निर्यासाः आसनारूढं पादोपहतं अमेध्यसंस्पृष्टं शुष्कं पर्युषितं द्विःस्विन्नं परिदग्धं अग्रावलेहितं शर्कराकीटपाषाण केशाद्युपप्लुतं मार्जारमूषकोच्छिष्टं आघ्रातञ्च निषिद्धं ॥ द्विःस्विन्नं यत्सकृत्पाकेन भक्ष्यमपि हिंगुजीरकादि संस्कारार्थं पुनः पच्यते तद्वर्ज्यं ॥ यत्तु तिक्तशाकान्नविकारादि द्विःपाकेनैव भक्षणार्हं तन्निषिद्धं ॥ अग्रावलेहितं आस्वादित-पूर्वं ॥ पर्युषितस्य सदा निषेधस्मरणात्पुनः कथनं स्नेह-पक्वस्य वटकादेः पर्युषितस्य ग्राह्यत्वेनोक्तस्यापि निषेधार्थं ॥ मरिचान्यार्द्राणि निषिद्धानि न शुष्काणीति हेमाद्रौ । पिप्पल्यपि निषिद्धेति तत्रैव । कमलाकरस्तु पिप्पलमरीचादेः प्रत्यक्षस्य निषेधो नत्वन्यद्रव्यविमिश्रस्येत्याह ॥ गोतृप्ति-करं प्रकृतिस्थं महीगतं जलं प्रशस्तं ॥ दुर्गंधि फेनिलं क्षारं पंकिलं पाल्वलं नक्तमाहृतं सर्वार्थोत्सृष्टजलाशयजं अभोज्य-जलाशयजं पर्युषितं जलं निषिद्धं । जाह्नवीजले न पर्युषित दोषः ॥ पाकार्थं सुवर्णादिधातुमयानि असंभवे नवान्यच्छि-

द्राणि मृन्मयानि पात्राणि प्रशस्तानि ॥ आयसादिर्निंदितानि पात्राणि न ग्राह्याणि ॥ फलशाकादिच्छेदनार्थं नायसशस्त्र-दोषः ॥ पक्वान्नस्थापनार्थं यज्ञियदारुसंभवानि प्रशस्तानि ॥

३८ भोजनकालनियमः—पवित्रपाणयो मौनव्रतान्विताः परस्परोच्छिष्टसंस्पर्शरहिताः मुखशब्दचापल्यरहिताः सशेषं भुंजीरन् । दधिक्षीरघृतपायसानितु निःशेषं । आपोशनं दक्षिणभागे कार्यं ॥ अत्र त्रिभिर्ग्रासैः प्राशनं न कार्यं केचिदाज्ये-नेच्छंति तन्निर्मूलं ॥ पायसाज्यमाषान्नैर्बलिदाने निषेधस्मर-णात् ॥ विप्राश्च वामकरेणान्नं नस्पृशेयुः ॥ न पदा भाजनं स्पृशेयुः ॥ अत्र मौनव्रता इत्यनेन अधिकं नवदेयुरित्यर्थः अपेक्षितंयाचितव्यं इति वक्ष्यमाणवचनाविरोधात् ।एवं चान्ना दियाचनं विनावाग्यमलोपे विष्णुस्मरणं कृत्वा पुनर्वाङ्नियमं कृत्वा भुंजीरन् ॥ अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितं ॥ न याचतेद्विजो मूढः स भवेत्पितृघातकः॥ संपादितेषु वस्तुषु अपेक्षितं करादिनैव याचयेयुरिति धर्माब्धिसारे॥ नासंपादित मन्नं याचयेयुः ॥ अन्नगुणदोषान्नकीर्तयेयुः ॥ कर्ताच अनिषिद्धान्नं उष्णमुष्णं भोक्तुः पितुश्चात्मनश्च प्रियं प्रय-च्छन् तत्तदन्नमाधुर्यादिगुणकीर्तनेन प्ररोचयन् ददामीत्य वदन् याचितं यच्छन् भुंजानानपश्यन् हविर्गुणाननुपृच्छन् दैन्याश्रुपातक्रोधादिकमकुर्वन् मधुरमधुरं जलं पाययन् शनै-

र्विप्रान् भोजयेत् ॥

३९ अभिश्रवणीय मंत्राः—अश्नत्सु जपेद्व्याहृतिपूर्वां गायत्रीं सप्रणवां सकृत्त्रिर्वा राक्षोघ्नीः पितृमंत्रान्पुरुषसूक्तम-प्रतिरथं अन्यानिपवित्राणीति। राक्षोघ्नीः कृणुष्वपाजइत्याद्याः पञ्चर्चः ॥ पितृमंत्रान् उदीरतामित्याद्यास्त्रयोदशर्चः । पुरुष सूक्तं सहस्रशीर्षेत्यादिकाः षोडशर्चः । अप्रतिरथं आशुः शिशानइत्याद्याः सप्तदशर्चः द्वादशर्चोवा ॥ अन्यानि च पवित्राणि रुद्रादीनि, अग्नयेकव्यवाहनायेत्यादीन् ॥ उपनिषद्भागान् विष्णुब्रह्मरुद्रार्कादिस्तोत्रं च भोक्तृविप्रान् श्रावयेत्।

४० भोक्तृब्राह्मणपरस्पर स्पर्शादि विचारः—श्राद्धपंक्तौ भुंजानानां द्विजानाम्परस्परसंस्पर्शे पात्रस्थमन्नं सर्वं भुक्त्वा गायत्र्यष्टशतजपः ॥ पात्रे विप्रांतरोच्छिष्टसंस्पर्शे तन्निरस्यहस्तं प्रक्षाल्य भुक्त्वा स्नात्वा द्विशतं जपेत्॥ उच्छिष्टभोजने सहस्रं जपेत् । भुंजानानां विप्राणां प्रमादाद्गुदस्रावे पादकृच्छ्रं कृत्वाऽन्यंविप्रं भोजयेत् । भोजनसमये उच्छिष्टपात्रममेध्य-हतंचेत्तत्पात्रमुद्धृत्य भुवं गोमयेनोपलिप्य पात्रांतरं पूर्ववदासाद्य तस्मिन्सर्वान्न पूर्ववत्क्षिप्त्वा विप्रं भोजयेत् ॥ मार्जार काकनकुलाखुगवादिभिरन्नाद्युच्छिष्टे कृतेऽप्येवमेव ॥ मक्षिकाकेशनखकीटपतंग पिपीलिकादिभिरल्पोहतौ तत्स-लग्नमन्नमुद्धृत्याप उपस्पृश्य शेषान्नानि भस्मना मृदाजले

न वा संस्पृश्य भोजयेत् ॥

४१ विप्रवमने विचारः-विप्रवमनानंतरं लौकिकाग्निं स्थापयित्वाऽऽज्यभागांतं स्थालीपाकतंत्रं विधायाग्नौ नाम गोत्राद्युच्चारपूर्वकं पितॄनावाह्य प्राणायस्वाहेत्यादिमंत्रपंचकेन प्रतिमंत्रं द्वात्रिंशच्चर्वाहुतीर्हुत्वा स्विष्टकृदादिहोमशेषं समाप्य वमितं विप्रं घृतं प्राशयेत् ॥ तत्र वैश्वदेविकविप्रवमने होम एव न श्राद्धावृत्तिः ॥ पित्रादि विप्राणां पितृविप्रवमने तद्दिने तदानीमेव होमं कृत्वोपोष्य द्वितीयादिने पुनः श्राद्धं ॥ पितामहादिविप्रवमने तदानीमेव होमं कृत्वा पाकांतरेण पुनः श्राद्धं ॥ इदं पिंडदानात्प्राग्वमने ॥ पिंडदानोत्तरं वांतौ होम एव न श्राद्धावृत्तिः ॥ इदं प्रत्याब्दिकाश्रद्धादौ ॥ नित्यश्राद्धादिभोजनप्राधान्यश्राद्धादौ भोजनसमये वांतौ आवृत्तिरेव भोजनोत्तरं वमने होम एव । दर्शादौ वांतावामेन तदैव श्राद्धं कुर्यात् । तीर्थमहालयादौ दर्शवत् आरब्धं श्राद्धं समापनीयं ।

४२ विकिरदानं—भुक्तवतां विप्राणामग्रतः सर्वव्यंजनसहितमन्नमुदकेनाप्लाव्य सतिलं विकिरेत् ॥ दध्योदनमेव विकिरेदिति कश्चित् ॥ नैतद्युक्तं ॥ यदन्नं पिंडदानेषु तदन्नं विकिरन्यमेदिति बृहद्याज्ञवल्क्योक्तेः ॥ पंक्तिमूर्धन्यस्योत्तरतोऽरत्निमात्रे विकिरदानमिति हेमाद्रिः ॥ उच्छिष्ट

स्योत्तरतः षडंगुले विकिरदानमिति केचित् । देवपितॄणामंतर इत्यन्ये ॥ भुक्तवतामग्रत इति योगीशः । तीर्थश्राद्धे न विकिरदानमिति गदाधरः । प्रेतश्राद्धे गयाश्राद्धे माता महश्राद्धे च न विकिरदानमिति वसिष्ठः । विकिरं पृथगेव निष्कास्य काकेभ्यः समुत्सृजेदिति काशिका ।

४३ अथ पिंडदानं—तत्रार्चनोत्तरमित्यादयः षट्कालाः श्रूयंते । तत्र कातीयानां विकिरोत्तरं विप्रेष्वाचांतेष्वनाचांतेषु वा पिंडदानस्य कालः । द्विजोच्छिष्टसमीपे व्याम (अरत्नि चतुष्टय) मात्रे संकटेऽरत्निमात्रे वा प्रदेशे दाक्षिणावर्तकं चतुरस्रं मंडलं विधाय कराभ्यां धृतेन स्फ्येन कुशमूलेन वा प्रत्याब्दिके एकां रेखां दर्शे द्वे महालये तिस्रः चतस्रोवा प्रतिपार्वणमेकैकां सर्वैकोद्दिष्टवर्जकृते एकांवा इति रेखां विलिख्य तदग्रे उल्मुकं निधाय रेखायां सकृदाच्छिन्नदर्भा नास्तीर्य तेषु अवनेजनं कृत्वा पिंडान् दद्यात् ॥ उल्मुक निधानमग्निमतामेवेति गदाधरः । साग्निनिरग्न्योर्नित्यमिति काशिका श्राद्धगणपतिश्च । आचारादिह व्यवस्था । सर्पिंजलाश्चहारिताः स्निग्धाः पुष्टाः समाहिताः । गोकर्ण दीर्घाश्चकुशाः सकृच्छिन्नाः समूलकाः । इति सकृदाच्छिन्न लक्षणं ब्राह्मे । मधुसर्पिस्तिलयुतान् पिंडान् कुर्यात् । पिंडे माषा निषिद्धा इति स्मृतिसारः । पिंडे सर्वान्नग्रहणस्य

स्मरणादिदं निर्मूलमिति सिंधौ । भुक्तशेषान्नाभावे द्रव्यांतरेण पिंडदानमिति धर्माब्धिसारे । एकोद्दिष्टे सपिंडे च कपित्थप्रमाणः पिंडोदेयः । प्रत्यब्दे मासिकेच नारिकेल प्रमाणः ॥ तीर्थे दर्शे च कुक्कुटांडप्रमाणः पिंडः । महालये गयायाञ्चामलकप्रमाणः । कपित्थबिल्वकुक्कुटांडजामलकबद् राणां मध्ये शक्तितोऽन्यतमप्रमाणेन पिंडमानमिति हेमाद्रावंगिराः ॥ पिंडबाहुल्ये बिल्वप्रमाणः पिंडैकत्वे खर्जूरोपम इत्याश्वलायनः । पार्वणपिंडेषु यथेतारपिंडमानाधिक्यं । महालये गयाश्राद्धे प्रेतश्राद्धे च पिंडशब्दप्रयोगः ॥ अन्यत्र अन्नशब्दप्रयोगः । महालयादौ पितृपार्वणात्पाश्चिमतो मातृभ्यः पिंडदानं ॥ तत्पाश्चिमे मातामहेभ्यः । तत्पाश्चिमे मातामहीभ्यः ॥ तत्पाश्चिम एकोद्दिष्टदेवताभ्यः । पिंडदाने केचन सूत्रकाराः "असावेतत्ते" इत्यस्यानंतरं "येचत्वामनु"इति मंत्रशेषमामनंति । स च न वाजसनेयिनां विषयः । एष शतपथश्रुतौ निंदार्थवादपूर्वकं "अददात्यसावेतत्त" इत्येव यजमानस्य पित्रे येचत्वामन्वित्यूहैक आहुः । तदुतथानु ब्रूयात् । स्वयं वैतेषां सह येषां सह तस्माद्ब्रूयात् असावेतत्त इति यजमानस्य पित्रे असवेतत्त इति पितामयाहासावेतत्त इति प्रपितामहायेति । येचत्वामित्यस्य पारमार्थिकस्तावदयमर्थः । "त्वामनु" ये त्वदनुचरीभूय त्वय

सह ये वर्तंते तेभ्यश्चैष पिंड इति निंदात्वेन, त्वां प्रमीत मनु पश्चाद्भावेन सह ये भवंति तेभ्योऽप्ययं पिंडोऽस्त्विति। तदैतदमंगल्यमभिधातं भवति। यथोऽय पिंडदानकुर्वाणः पुत्रादिभिर्येचत्वामन्विति मंत्रेण येषां प्रमीतानां सहेत्याह तेषां पश्चाद्भूतः स्वयमेव भवति। अतश्चासौ स्वस्मा एव पिंडदानं करोतीति प्रतिभाति। तथा चैतदमंगल्यं। अत स्तथा न ब्रूयादित्यस्याः श्रुतेरर्थः। पिंडदानानंतरं प्रपितामहापिंडांतिके दर्भमूलेषु करावघर्षणं कार्यं॥ तेन प्रपितामहादूर्ध्वं ये लेपभागिनः पितरस्ते प्रीणंति। एकोद्दिष्टे लेपो नेति सुमतुः॥ महालये तीर्थश्राद्धे चासपिंडस्य पुरस्ताच्चत्वारो धर्मपिंडा देयाः। एतद्व इति त्रिगुणं सूत्रं प्रतिपिंडं देयं॥ ततः सव्येन अक्षतगंध पुष्पधूपदीप सर्व प्रकारक नैवेद्य तांबूलदक्षिणात्मकाष्टोपचारैः पिंडपूजनं। पिंडोपघातादौ प्रायश्चित्तं--श्वशृगालखरमार्जारमूषकचांडाल पतितादिभिः पिंडसंस्पर्शे प्रमादात्पिंडोपघाते च प्राजापत्यश्चरित्वा स्नात्वा पाकांतरेण तेनैव पाकेन वा पिंडदानमात्रं कार्यं॥ न सर्वश्राद्धावृत्तिः। काकस्पर्शे न दोषः।

४४ पिंडदान निषेधविचारः--विवाहादूर्ध्वं वर्षपर्यंतं उपनयनात्षण्मासपर्यंतं चूडायास्त्रिमासपर्यंतं पिंडदानं निषिद्धं। जीवत्पितृकस्य, गर्भिणीपतेश्च षण्मासादूर्ध्वं,

पिंडदानं निषिद्धं । महालये गयाश्राद्धे पित्रोः प्रत्याब्दिके कस्यापिमृतस्य सपिंडीकरणे मासिकेषु प्रेतकृत्येषु च कृत मंगलेऽपि पिंडदानं कुर्यात् ॥ अत्र गयाश्राद्ध इति शब्द-स्तीर्थान्युपलक्ष्यंते इति श्राद्धगदाधरः । पिंडपितृयज्ञान्वष्ट-कादावपि न पिंडदाननिषेधः ॥

४५ आचांतेषु विप्रेष्वक्षय्योदकदानं—आचांतेष्वित्य-नेन भुक्तविप्राणां करशुद्धिपूर्वकमाचमनमुपलक्ष्यते । अक्षय्यो दकशब्देन दत्तान्नपानादेरानन्त्यप्रार्थनसंबंधिजलमाभिधी-यते । तच्च पितृब्राह्मणेभ्य एवेति कर्काचार्याः ॥ सर्वेभ्य इति स्मृत्यर्थसारः ॥

४६ स्वाधावाचनीयसंज्ञकान् सपवित्रान् (साग्रान्)कुशा नादाय पिंडसमीपे भूमौ स्तृत्वा स्वधांवाचयिष्ये पंक्तिमू-र्धन्यं सर्वान्वा पृच्छेत् इति (गदाधरः॥ न्युब्जपात्रोपरि स्था पितानि पवित्राण्यर्घपवित्रैः सह समानीय पिंडानां पश्चिमतो दक्षिणाग्राणि निधाय स्वधांवाचयिष्ये इति पृच्छेदिति) हेमाद्रिः । सकुशानि पवित्राणि पिंडानामुपर्यास्तीर्य स्वधां-वाचयिष्ये इति पृच्छेदिति देवयाज्ञिककाशिकादयः ॥

४७ दक्षिणाविचारः—देवतानां हिरण्यं । पितॄणां रजतं ॥ दक्षिणादानं देवपूर्वकमिति गदाधरः पितृपूर्वक सव्येनैवेति काशिका । पितृदेशेन दक्षिणादानेऽपसव्यं

विप्रोद्देशे तु सव्यमित्याचारेंदौ माधवः । विप्रगुणानुरोधेन न्यूनाधिकदाक्षिणादानं ॥ नात्रदोष इति मयूरादयः ॥ एतस्मिन्नवसरे सत्यां शक्तौ गोभूहिरण्यवासःशयनयान- दीपिकाधूपपात्रंकंन्चुकोष्णं षोदकमंडलुच्छत्रोपानदर्पणव्यज- नतांबूलचामरसुवर्णाद्यलंकारासनसुगंधद्दमांतिकापद्धताहृगंडूप पात्र भोजनपात्रतदाधारपात्रादीनि देयानि । अल्पशक्तौ यज्ञोपवीतमात्रं वोभयत्र दक्षिणा ॥

४८ श्राद्धे सर्वत्र सर्वदा तिलकनिषेधः स्मर्यते-अथापि प्रयोगेष्वाशीःपार्थन.नंतरं तिलकविधानं दृश्यते । मूलंतु, "याचितारश्चनः संतु माच याचिष्म कंचन । ततस्तु तिलकं कुर्यात्" इति वृद्धयाज्ञवल्क्य इति काशिका ।

४९ सकृदाच्छिन्नान्यादावग्नौ निक्षिप्य पश्चादुल्मुक- स्याग्नौ प्रक्षेप इति गदाधरवैद्यनाथादयः इदं साग्निकविषयं । निरग्निकानांतु दर्भसहितमेव पिंडोद्धारणं उल्मुकस्य यथा देशत्यागं कुर्यात् । असंस्कृताग्नित्वात् इदं साम्राज्यभट्ट- कृष्णमिश्रादिभिर्निर्णितं । हेमाद्रिस्तु पचनाग्नौ सकृदा च्छिन्नानि उल्मुकं च प्रक्षिपेदिति श्राद्धगणपतौ ।

५० स्वयं शिष्यादिनावा भोजनपात्राणि चालयि- त्वाऽऽचामेत् । स्त्रीहीनजातिरग्रजो वा भोजनपात्राणि नचालयेत् । अग्रजो नाम यजमानापेक्षयाऽधिकवयस्क

इति हेमाद्रिः ॥ भोजनपात्राणामुद्वासनं स्वावस्तमिते कार्यं ॥
गृहांतरसत्व इदं इति कमलाकरः । गृहैकत्वे तु अनुव्रज्य
विसर्जितेषु विप्रेषु उच्छिष्टोद्वासनमिति मनुः । द्विजभुक्ता-
वशिष्टं सर्वमेकत्र संहृत्य शुचौ भूमौ निखन्याच्छादयेदिति
जातूकर्ण्यः । उच्छिष्टोद्वासनोत्तरं सर्वमागारं गोमयेनोपलेप-
येदिति वाजपेययाजिनः ।

५१ पिंडप्रतिपत्तिः—पिंडान् गोऽजविप्रेभ्यो वा दद्यात् ॥
अग्नौ जले दक्षिणां दिशमीक्षन् क्षिपेदिति भगवान् याज्ञ
वल्क्यः । अत्र गोशब्दो गतवीर्यवृषभपर इति काशिका ।
वायुपुराणे कामनाविशेषेण व्यवस्थितं । भोगार्थी पिंडानग्नौ-
क्षिपेत् ॥ प्रजार्थी मंत्रपूर्वकं पत्न्यै दद्यात् । उत्तमां गति
मिच्छन् गोभ्यः । आज्ञां प्रज्ञां यशः प्रेप्सुर्जले । दीर्घायु
ष्कामो वायसेभ्य इति कात्यायनः । दक्षिणाभिमुख आका
शेवा आधत्त इति मध्यमं पत्नी प्राश्नाति पुत्रकामा आधत्त
इति प्राशनमंत्रः अपांत्वोषधीनां इति दानमंत्रः पत्नीति
पुत्रकामापत्नीमात्रोपलक्षणमित्येके ॥ पुत्रकामा पतिव्रतेति
काशिका । अनेक भार्यापक्षे मध्यमपिंडो विभज्य सर्वाभ्यो
देयः पारिजातेतु, षड्दैवतश्राद्धे पत्नीद्वित्वे एकैकमेकैकस्यै
दद्यात् बहुत्वे गुणवत्यै । त्र्यतः कालतश्च समर्थाभ्यां
दद्यात् सर्वासां सामर्थ्ये ऋतुकालानुसारेण एकैकस्मिन्श्राद्धे

एकैकस्यैवा मध्यपिंडप्राशनं काम्य नतु नित्यमिति मयूखे। अप्राप्तरजस्का गुर्विणी वन्ध्या गतरक्ता रजस्वला जारिणी प्रसूतिकाच पिंडभक्षण कुर्यादिति न चंद्रिकायां ॥ मध्यमपिंडस्य पत्न्याः प्राशने इतरयोः प्रतिपत्तिस्तु प्रागुक्तैव ॥

५२ विकिरप्रतिपत्तिः--केचित्तु तस्यास्पृस्यत्वादुच्छिष्टत्वादुच्छिष्ट एव प्रतिपत्तिः अन्येनु उच्छिष्टपिंडत्वात्पिंडे तस्य प्रतिपत्तिरिति वदंति ॥

५३ वैश्वदेवनिर्णयः—कातीयानांतु श्रौतस्मार्ताग्निमतां आदावेव वैश्वदेवः ॥ अन्येषामते । वृद्धिश्राद्धेऽप्येष एवनियमः ॥ 'वृद्धावादौक्षयेचांते' इति शांखायनपरिशिष्टोक्तं वचनं तच्छाखीयपरमिति कामदेवदीक्षिताः ॥ विधानपारिजाते संस्कारगणपतौच काण्वानां सर्वत्र श्राद्धेषु साग्निरग्निकयोरादावेव वैश्वदेव इत्युक्तं धर्मानुशासने 'श्राद्धकर्माणि निर्वृत्य वैश्वदेवं विधायच । ततो गृहबलिः कार्यः कठकाण्वादिकान्विना' ॥ इति । रूपनारायणीयेऽपि 'साग्निकास्तद्विहीनाश्च कठकाण्वादिकास्तु ये । श्राद्धात्प्रागेव कुर्युस्ते वैश्वदेवं यथाविधि' ॥ उभयार्थमेकपाक इति कर्काचार्याः भिन्न इति श्राद्धगणपतौ ॥

५४ श्राद्धशेषभोजनं—श्राद्धशेषमिष्टान्भोजयित्वा स्वयंभुंजीत । श्राद्धशेषभोजनं दिवैव नतु रात्रौ ॥ उपवासप्राप्तौ

यत्र कृष्णैकादश्यादावुपवासोनावश्यकस्तत्र वैधत्वाद्-भुंजीत । यत्र तु शिवरात्र्येकादश्यादावुपवास अवस्यकस्तत्र श्राद्धशेषान्नस्यावघ्राणमेवेति कमलाकरः ॥ काम्योपवासे नक्तव्रते चाग्रयमेव ग्रहणवेधे च भुंजीतेति कमलाकरः । हेमाद्रिस्तु यत्रोपवास आवश्यकस्तत्र एकभक्तमयाचितं वा कार्यमित्याह ॥ ज्ञातिसगोत्रसंबंधिभिन्नानां श्राद्धशेषभोजने महादोषः । ब्रह्मचारियतिविधवानां च नियतं निषिद्धं शेषभोजनं ॥ सगोत्रसकुल्यज्ञातिनां न दोषः । गुरोर्योगिनो वा श्राद्धशेषभोजनं गृहिणा न दोषाय । शूद्रं श्राद्धीयहविर्गृहे न भोजयेत् । श्राद्धशेषं च शूद्रेभ्यो न दद्यात् ॥

५५ श्राद्धांगतर्पण-तच्च मन्वादि युगादि दर्शसंक्रांति पौर्णमासीव्यतिपातवैधृतितीर्थश्राद्धेषु श्राद्धीयपितृद्देशे श्राद्धात्पूर्वं कार्यं । सांवत्सरिके सकृत् महालये च परेद्युः कार्यं। अन्येषु महालयपक्षेषु अष्टकान्वष्टकापूर्वेद्युः श्राद्धेषु अर्धोदयगजच्छायाकपिलाषष्ठीमघाभरणीश्राद्धेषु हिरण्यं श्राद्धे चानुव्रज्य कार्यं । तर्पणमिदं तिलसहितं ॥ यत्र श्राद्धात्पूर्वं तर्पणमुक्तं, तत्र मध्याह्ने स्नात्वा माध्याह्नसंध्यां विधाय ब्रह्मयज्ञं कृत्वा नित्यतर्पणेन सह श्राद्धांगतर्पणस्य तंत्रेणानुष्ठानं प्रसंगासिद्धिर्वा ॥ अन्येतु नित्यतर्पणं मातृपितृवर्गयोर्भिन्नं दर्शादौ तु सपत्नीकस्य पितृवर्गस्येति देवताभेदात्तत्रे

णानुष्ठानं नोचितमिति वदंति ॥ अस्मिन् पक्षे श्राद्धांगं मतिलं तर्पणं नित्यतर्पणात्पृथग्विधाय श्राद्धारंभः कार्यः । यत्र श्राद्धांते तर्पणं विहितं तत्र विप्रानुव्रजनानंतरं तर्पणं कृत्वा भोजनं ॥ यत्र परेहनि तर्पण विहित तत्र स्नात्वा प्रातः संध्यामुपास्य श्राद्धांगतर्पण विधाय पुनः स्नात्वा शेषमाह्निकं कुर्यात् ॥ एतत्तर्पणं येषां श्राद्ध क्रियते तेषामेव ॥ निषिद्धेऽपिकाले तर्पणमिदं सतिलमेव । जीवत्पितृकैः श्राद्धांग तर्पणं शुक्लतिलैः केवलजलेन वा कार्यं

५६ श्राद्धसंपाते निर्णयः—एकस्यां तिथौ मातापित्रो र्मरणे पूर्वं पितुःप्रत्याब्दिकं कृत्वा पश्चान्मातुरिति चंद्रिका यां ॥ मरणक्रमेणेति हेमाद्रिः ॥ वर्गद्वयस्य दर्शवत्तंत्रेण श्राद्धं कुर्यादिति श्राद्धकमलाकरः ॥ पौर्वापर्याज्ञाने तु पितृ पूर्वमेवेति हेमाद्रिः ॥ अनेकनिमित्तप्राप्तौ निमित्तक्रमेण श्राद्धानि भवंति ॥ यथा दर्शे पितृक्षयाहसंप्राप्तिश्चेत्प्राक् क्षयाहश्राद्धं कृत्वा दार्शं कार्यं । तदपि समाप्य ग्रहण चेत् तन्निमित्तकमपि कृत्वा पुत्रजन्म यदि तन्निमित्तकमपि कुर्वीत । एवं दर्शे प्रत्याब्दिकं महालयसंपातेऽपि ॥ तत्रादौ मध्याह्न एव सांवत्सरीकारंभं कृत्वा ब्राह्मणविस्तारवर्जं महालयं कृत्वा पिंडपितृयज्ञं कृत्वा संकल्पविधिना दर्शश्राद्धं कुर्यात्॥ अन्यथाऽपराण्हे कर्मचतुष्टयासंभवात् । सतिसंभवे

यथोक्तं कर्तव्यं । एवमन्यत्रापि द्रष्टव्यं ॥ पित्रादि बहूनामेकस्यां तिथौ मरणे संबंधक्रमेण मरणक्रमेण वा पृथक् पृथक् श्राद्धानि कार्याणि । पार्वणैकोद्दिष्टयोः संप्राप्ते प्रागेकोद्दिष्टं पश्चात्पार्वणं ॥ श्राद्धसंपाते यादृश श्राद्धानां प्रसंगस्तंत्रं वा तेषां तर्पणेऽपि तथैव ॥ श्राद्धावृत्तौ तु तर्पणस्यापि अवृत्तिरुक्तप्रकारेणादावंते चेति ॥

५७ श्राद्धविघ्ने निर्णयः—तत्र श्राद्धारंभात्पूर्वमाशौचप्राप्तौ प्रत्याब्दिकमाशौचांते कर्तव्यं । मासिकंतूत्तरेण सह । दर्शश्राद्धादीनां लोप एव । तत्राप्याशौचांते श्राद्धलोपप्रायश्चित्तार्थमुपवास इति कमलाकरः । श्राद्धारंभोत्तरं कर्तुराशौचप्राप्तौ प्रारब्धं श्राद्धं समापनीयं । कर्मसमाप्ति पर्यंतं नाशौचं कर्तुः । श्राद्धारंभस्तु पाकारंभ इति एके । पाकसिद्धिरित्यन्ये । पाकप्रोक्षणमिति केचित् । विप्रनिमंत्रणमित्यपरे ॥ अत्राचाराद्व्यवस्था ॥ भोक्तुर्दोष एवेति कमलाकरः । आशौचिनां गृहे श्राद्धभोजने यावत्कर्तुराशौचं भोक्तुरपि आशौचं तावत् । आशौचांते भोक्तुः सांतपनं प्रायश्चित्तमिति मार्कंडेयः ॥ मासमेकं व्रतीति शंखः ॥ अज्ञानात्त्वेकरात्रमुपोष्य पंचगव्याशने शुद्धिरिति छागलेयः ॥ माधवादयस्तु सर्वत्र प्रायश्चित्तं द्विगुणमिति । विप्रस्य त्वाशौचसंपाते निमंत्रणात्तरं नाशौचमिति सिंधौ । शुद्धिविवेकस्त्विदं आमश्रा

द्धापरत्वेन व्याचष्टे ॥ अन्येत्वासनदानोत्तरं नाशौचमिति । अपरेत्वावाहनोत्तरमित्याहुः । युक्तंचैतदेव ॥ अस्मिन्पक्षे आसनावाहनोत्तरं भोक्तुराशौचसपाते विसर्जनपर्यंत नाशौचं । आसनादर्वागाशौचसंपाते तत्स्थानेऽन्यं विप्रं निमंत्र्य भोजयेत् ॥ विप्रस्य भोजनसमये दातुर्गृहे तद्बांधवादिमरणादौ शेषमुच्छिष्टमन्नं त्यक्त्वा परकीयशुद्धजलेनाचमेत् ॥ प्रारब्धे श्राद्धे नाशौचमिति केचित् । तत्र मूलं चिंत्य ॥कर्तुर्भार्यारजोदर्शने दार्शिक युगादि मन्वादि संक्रांति वैधृति व्यतिपाताद्यावश्यकानि आमेन कार्याणि । शुद्धपत्न्यंतर सत्वेऽन्नेनैव । पचमेऽहनि कार्याणीति कालादर्शे । नैतद्युक्तमिति चंद्रिका ॥ पित्रोराब्दिकं तु तद्दिन एवान्नेन सपिंडकं कार्यं । मासिकेप्येवमेव ॥ केचिद्भार्यांतरसत्वे तद्दिन एव ॥ एकभार्यस्तु पंचमेऽहनि कुर्यादिति वदंति । इदं कमलाकरादीनां नाभिमतं । एक भार्योऽपि तद्दिन एव कुर्यादिति स वदति । महालयश्राद्धानि रजस्वलायामपि भार्यायामन्नेनैव भवंति । सकृन्महालयश्राद्धं स्नातायां पूर्वोक्तकालांतरे कार्यं । काम्यानां लोप एव ॥ नैमित्तिकान्यावस्यकानि त्वामेन कार्याणि । अनावस्यकानां लोपः। अपुत्रकस्य स्त्री श्राद्धकर्त्री यदि रजस्वला । पंचमेऽहनि तदाब्दिकं कुर्यात् ॥ सकृन्महालयस्तु पूर्वोक्तकालांतरे ।

दर्शादीनां लोप एवेति संक्षेपः।

५८ श्राद्धभोजनादौ प्रायश्चित्तम्-प्रथमाब्दिके द्वितीयाब्दिके तृतीयाब्दिके च पादोनकार्यं। अनापदि चांद्रं। चतुर्थाब्दिकादौ षट्प्राणायामाः। नक्तं वा॥ दर्शे षट्प्राणायामाः। अनुक्तौ पार्वणश्राद्धे दर्शातिदेशात् षट्प्राणायामाः। सर्वेषु श्राद्धेषु दशकृत्वो गायत्र्या अभिमंत्रिता अपः पीत्वा संध्योपासनहोमादि यन्नित्यकर्म तत्कुर्यात्। एतदनुक्तप्रायश्चित्तपरमिति विज्ञानेश्वरः। काम्यनैमित्तिकश्राद्धेषु दोषाल्पत्वे दर्शवत्षट्प्राणायामाः। पतितचांडालदुर्मरणादिमृतानां श्राद्धेषु द्विगुणं प्रायश्चित्तं। गुरुद्रव्यार्थं श्राद्धभोजने प्रायश्चित्तार्धं। जपशीलस्य निस्पृहस्य च तदर्धं। क्षत्रियादिश्राद्धेषु द्वित्रिचतुर्गुणानि प्रायश्चित्तानि। सर्वत्राभ्यासे द्विगुणं। आमहेमसंकल्पश्राद्धेषु तत्तदर्धानि प्रायश्चित्तानि। वृधौ प्राणायात्रयं कृच्छ्रा वा। सीमंतनामकरणजातकर्मचूडाकर्मांगवृद्धिश्राद्धे सांतपनं। सांतपने धेनुद्वयदानं प्रत्याम्नायः। अनापदि चांद्रं अन्यकर्मांगवृद्धिश्राद्धेषूपवासः। अनापदि त्रिरात्रमुपवासः। यतिर्व्रती ब्रह्मचारी चोक्तप्रायश्चित्तं कृत्वा त्रीनुपवासांस्त्रीन् प्राणायामान् घृतप्राशनंचाधिकं कृत्वा व्रतशेषं समापयेत् अनापदि द्विगुणं प्राश्चित्तं। द्वादश प्राणायामाः पंचगव्याशनं चेति संक्षेपः॥

५९ निमंत्रितविप्रत्यागे विचारः-निमंत्रितविप्रस्य प्रमादात्त्यागे तं प्रयत्नेन प्रसाद्य बुद्धिपूर्वकत्यागे चांद्रायणं प्रायश्चित्तं निमंत्रितो विप्रो प्रमादादन्यत्र यदिभोक्तुं गच्छेत् तदा त्रिरात्रमुपवासः। प्रमादाभावे प्राजापत्यं। भोजन समये शूद्रांत्यजादिदर्शने भोजनोत्तरमाचमनपूर्वकं प्राणायामत्रयं कार्यं ॥

६० श्राद्धभोक्तुः कर्तुश्च नियमलोपे प्राश्चित्तं—दंतधावने शतकृत्वो गायत्र्याऽभिमंत्रितजलपानं। ऋतौ भार्यागमने उपवासः। अनृतौ प्राजापत्यं। वाग्लोपे विष्णुस्मरणं। नियमांतरलोपे प्रायश्चित्तं निर्णयसिंध्वादि ग्रंथांतरादवसेयं। अनादेशे शतगायत्रीजप इति ॥



# १ ॥ प्रतिसांवत्सरिकश्राद्धपद्धतिः ॥



यजमानः श्राद्धदिनात्पूर्वेद्युः प्रदोषांते भुक्तवत्सु द्विजेषु श्राद्धादिने प्रातर्वा ब्राह्मणगृहं गत्वा ब्राह्मणनिमंत्रणं कार्यं ॥ पवित्रपाणिराचम्य प्राणानायम्य यज्ञोपवीती उदङ्मुखः प्राङ्मुखस्य द्विजस्य दक्षिणं जानुमुपस्पृश्य अस्मत् पितृपितामहप्रपितामहसंबाधिनां पुरूरवार्द्रवसंज्ञकानां विश्वेषां देवानां कृत्ये श्वः अद्यवा कारिष्यामाणप्रतिसांवत्सरीक श्राद्धे भवान् मया निमंत्रितः ॥ इति तांबूलेन कुशेन वा विप्रं निमंत्रयेत् ॥ आमंत्रितोऽस्मि इति प्रतिवचनं ॥ अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः । भवितव्यं भवद्भिश्च मयाच श्राद्धकारिणा ॥ इति नियमान् श्रावयेत् ॥ [विप्रबहुत्वे प्रतिविप्रं निमंत्रणमेवं कार्यं] ततः प्राचीनावीती दक्षिणाभिमुखः उदङ्मुखस्य द्विजस्य सव्यं जानुमुपस्पृश्य अमुकसगोत्राणां अस्मत् पितृपितामहप्रपितामहानां अमुकामुकशर्मणां वसुरुद्रादित्यस्वरूपाणां कृत्ये श्वः अद्यवा कारिष्यमाणप्रतिसांवत्सरीकश्राद्धे भवान् मया निमंत्रितः ॥ इति तांबूलेन कुशेन वा विप्रं निमंत्रयेत् आमंत्रितोऽस्मि इति प्रतिवचनं ॥ अक्रोधनैः शौचपरै० ॥ इति नियमान्

श्रावयेत् [ एवं दर्शमहालयादौ मातामहादि द्विजनिमंत्रणं कार्यं ॥ प्रत्येकमेकैकाद्विजपक्षे अ० गोत्रस्य अस्मत्पितुः अ० शर्मणः वसुरूपस्य कृत्ये श्राद्धेत्वत्यादि० ॥ एवं पितामहादिविप्राणां निमंत्रणं पृथक् पृथक् कार्यं ॥ अग्रे उपचारनिवेदनादावप्येवमेव ॥ ] ततः कर्ता श्राद्धदिने पाकसिद्धिंकारयित्वा निमंत्रितान्विप्रानाहूय प्रत्युत्थानस्वागत वचनादिना सत्कृत्यमाध्याह्निकं कृत्वा नद्यादौ स्नात्वाऽपराह्णे पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनामि ॥ अच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ १ ॥ इति पवित्रं धृत्वा द्विराचम्य त्रिःप्राणानायम्य देशकालौ स्मृत्वा पुण्य तिथौ ॥ अपसव्यं अ० गोत्राणां अस्मत्पितृपितामहप्रपिता महानां अ० शर्मणां वसुरुद्रादित्यस्वरूपाणां प्रतिसांवत्सरीक श्राद्धं पुरूरवार्द्रवसंज्ञकानां विश्वेदेवपूर्वकं सपिंडं पार्वणेन अन्नेन हविषा सद्यः करिष्ये ॥ कुरुष्वेति प्रति वचनं ॥ सव्यं ॥ ततो यजमानो ब्रह्मदंडं (कुश तिलसहितं हिरण्यं) गृहीत्वा ब्राह्मणान् प्रदक्षिणत्रयं कुर्यात् ॥ तत्र मंत्राः समस्तसंपत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः॥ अपारसंसारसमुद्रसेतवःपुनंतु मां ब्राह्मणपादपांसवः ॥ १ ॥ आपद्घनध्वांतसहस्रभानवः समीहितार्थार्पणकामधेनवः ॥ समस्ततीर्थांबुपवित्रमूर्तयो रक्षंतु मां ब्राह्मणपादपांसवः॥२॥

विप्रौघदर्शनात्क्षिप्रं क्षीयंते पापराशयः ॥ वंदनान्मंगला-वाप्तिरर्चनादच्युतं पदं ॥ ३ ॥ इति ततः । आधिव्याधि हरं नृणां मृत्युदारिद्र्यनाशनं ॥ श्रीपुष्टिकीर्तिदं वंदे विप्र श्रीपादपंकजं ॥ इति नत्वा तिलदर्भोदकानि गृहीत्वा अपवित्रः० शुचिः ॥ शुद्ध वालः सर्व शुद्धवालो मणिवा-लस्त आश्विनाः ॥ श्येतश्येता क्षोरुणस्ते रुद्राय पशुपतये कर्णा यामाः ॥ इति स्थलं प्रोक्षेत् ॥ ततः प्रतिसांवत्सरीक श्राद्धे शरीरशुद्धिद्वारा अधिकारसंपत्यर्थं पावनमंत्रपठणमहं करिष्ये ॥ इति संकल्प्य सहस्रशीर्षा० देवाः ॥ पुनंतुमा पितरस्सोम्यासः पुनन्तुमा पितामहाः पुनन्तु प्रपितामहाः ॥ पवित्रेणशतायुषा ॥ १ ॥ पुनन्तुमा पितामहाः पुनन्तु प्रपितामहाः ॥ पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ २ ॥ अग्न आयूंषि पवस आसुवोर्जमिषञ्चनः ॥ आरेबाधस्वदु-च्छुनाम् ॥ ३ ॥ पुनन्तुमा देवजनाः पुनन्तु मनसाधियः ॥ पुनन्तुविश्वा भूतानि जातवेदः पुनीहिमा ॥ ४ ॥ पवित्रेण पुनीहिमा शुक्रेणदेवदीद्यत् ॥ अग्ने क्रत्वा क्रतूंरनु ॥ ५ ॥ यत्ते पवित्रमर्चिष्यग्नेविततमन्तरा ॥ ब्रह्मतेन पुनातुमा ॥६॥ पवमानस्सो अद्यनः पवित्रेण विचर्षणिः ॥ यः पोता सपुना-तुमा ॥ ७ ॥ उभाभ्यान्देव सवितः पवित्रेण सवेनच ॥ माम्पुनीहि विश्वतः ॥ ८ ॥ वैश्वदेवी पुनती देव्यागाद्य-

स्यामिमा वृद्धचंस्तन्वोंवीतपृष्ठाः ॥ तया मदन्तस्सधमादेषु वयं स्याम पतयोरयीणाम् ॥१॥ चित्पतिर्मापुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ तस्यते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयं ॥ १ ॥ वाक्पतिर्मा पुनात्वच्छिद्रेण० ॥ तस्यते पवित्रपते० ॥ २ ॥ देवोमासविता पुनात्वच्छिद्रेण० तस्यते पवित्रपते० ॥ पुनातु भूःपुनातु भुवः पुनातु स्वःपुनातु भूर्भुवःस्वःपुनातु । तत्सवितुः०प्रचोदयात् ॥ १ ॥ इतिजपेत् । ततो यजमानो यज्ञोपवीती दक्षिणज्ञान्वाच्योदङ्मुखः प्राङ्मुखस्य द्विजस्य दक्षिणं जानुं दक्षिहस्तेन स्पृष्ट्वा । अस्मत्पित्रादित्रयसंबं०विश्वेषां देवानां कृत्ये प्रतिसांवत्सरीक श्राद्धे भवान् मया निमंत्रितः इति तांबूलेन कुशेन वा निमंत्रयेत् ॥ आमंत्रितोऽस्मीति प्रतिवचन । अक्रोधनैः०कारिणा । इति नियमान् श्रावयित्वा भवद्भिः प्रति सांवत्सरीक श्राद्धीयदेवकार्थं नः संपाद्यं, प्रसीदंतु भवंतः । इति प्रार्थयेत् ॥ प्रसन्नाः स्मः इतिप्रति० ॥ ततः कर्ता प्राचीनावीती दक्षिणाभिमुखः पतितवामजानुः उदङ्मुखस्य द्विजस्य सव्यंजानुं दक्षिण हस्तेन स्पृष्ट्वा अ०सगोत्राणां अस्मत्पितृपिता० वसुरुद्रादित्यस्वरूपाणां कृत्ये प्रतिसांवत्सरीकश्राद्धे भवान्मया निमंत्रितः इति तांबूलेन कुशेनवा निमंत्रयेत् । आमंत्रितो

स्मीति प्रति०॥ अक्रोधनै० कारिणा ॥ इति नियमान्श्राव यित्वा भवद्भिः प्रतिसांवत्सरिकश्राद्धीयपितृकार्यं नः संपाद्यं प्रसीदंतु भवंत इति प्रार्थयेत् । प्रसन्नाः स्म इति प्रति० ॥ सव्यं । ततः कुशोपरि स्थित्वा द्विजान्स्वागतमिति पृच्छेत्॥ सुस्वागतमिति प्रति० ॥ ततः श्राद्धदेशात्पुरतोऽङ्गणे गोमय गोमूत्राभ्यां चतुरस्रं द्विहस्तं प्रादेशमात्रं वोदक्प्लवं देव मंडलं विधाय ॥ अपसव्यं ॥ दक्षिणतः षडंगुलं त्यक्त्वा चतुर्हस्तं वितस्तिमात्रं वा दक्षिणाप्लवं वर्तुलं पित्र्यमंडलं कुर्यात् ॥ सव्यं ॥ ततो देवमंडलस्योपरि पूर्वाग्रकुशद्वयं स्थापयित्वा तदुपरि यवान् स्थापयेत् ॥ अपसव्यं ॥ पितृ मंडलस्योपरि दक्षिणाग्रकुशत्रयं स्थापयित्वा तदुपरि तिलान् स्थापयेत् ॥ सव्यं ॥ ततो देवमंडलपूजनं॥ देवमंडलस्थाने अन्नं नमः, गंधं नमः, यवान् नमः, पूर्वाग्रद्विदर्भ पत्रपुष्पं नमः ॥इति॥अपसव्यं।पितृमंडलपूजनं । पितृमंडलस्थाने अन्नन्नमः, गंधं नमः, तिलान्नमः, दक्षिणाग्रत्रिदर्भपत्रपुष्पं नमः । इति कुर्यात् ॥ सव्यं । ततो देवमंडलात्पश्चिमतो देवब्राह्मणं प्राङ्मुखमुपवेश्य स्वयम्प्रत्यङ्मुख उपविश्य विप्रपादौ मंडले निधाय—अस्मत्पित्रादित्रयसंबंधिनः पुरूरवार्द्रवसंज्ञका विश्वेदेवाः प्रतिसांवत्सरिकश्राद्धे इदं वः पाद्यं ॥ इति पाद योर्येवोदकं दत्वा अस्तु पाद्यमिति प्रति० ॥ शन्नो देवीरभि

ष्टय आपो भवन्तु पीतये । शंय्योरभिस्रवन्तुनः ॥१॥ इति शुद्धजलेन पादौ प्रक्षाल्य देवपादयोः अत्रं नमः गंधं नमः यवान्नमः, पूर्वाग्राद्विदर्भपत्रपुष्पं नमः ॥ अस्मत्पित्रादि० विश्वेदेवाः प्रतिसांवत्सरिकश्राद्धे एष वः पादार्घः ॥ इति पूजयेत् । अस्तु पादार्घ इति प्रति० ॥ ततः—सहस्रशीर्षा० गुलं ॥१॥ इति विप्रपादादियुग्मक्रमेण पादजान्वंसशिरःसु गंधादिभिः पूजयेत् । अपसव्यं । ततः पित्र्यमंडलाद्दक्षिणतः पित्र्यब्राह्मणमुदङ्मुखमुपवेश्य स्वयंदक्षिणाभिमुख उपविश्य विप्रपादौ मंडले निधाय—अमुकसगोत्राः अस्मात्पितृपितामह प्रपितामहाः अमुकामुकशर्माणः वसुरुद्रादित्यस्वरूपाः प्रति सांवत्सरीकश्राद्धे इदं वः पाद्यं इति पादयोः तिलोदकं दद्यात्॥ अस्तुपाद्यमिति प्रतिव० ॥ शंनोदेवी० स्रवंतुनः ।१। इति शुद्ध जलेन पादौ प्रक्षाल्य-पितृपादयोः अत्रं नमः, गंधं नमः तिलान् नमः, दक्षिणाग्रत्रिदर्भपत्रपुष्पं नमः ॥ अ० गोत्राः अस्म त्पितृपिता० अ०शर्माणः वसुरुद्रादित्य स्वरूपाः प्रतिसांवत्स रीकश्राद्धे एषवः पादार्घः ॥ इति पूजयेत् ॥ अस्तुपादार्घ इति प्रतिव०॥ पितृभ्यस्स्वधायिभ्यस्स्वधा नमः पितामहेभ्यस्स्वधा यिभ्यस्स्वधानमः ॥ प्रपितामहेभ्यस्स्वधायिभ्यस्स्वधानमः ।१। इतिविप्रवामांगादिषु युग्मक्रमेण शिरोंसजानुपादेषुगंधादिभिः पूजयेत् । ततो मंडलादुत्तरतो ब्राह्मणानाचाम्य स्वयं पवित्रं

त्यक्त्वा यज्ञोपवीती पादौ प्रक्षाल्य पादप्रक्षालनपूर्वदेशे द्विराचम्य पवित्रं धृत्वाचम्य ब्राह्मणपूर्वकं गृहं व्रजेत् । ततो देवब्राह्मणोपवेशनार्थं प्रागग्रकुशद्वयसहित मासनं स्थपायित्वा तदुपरि यवान्निक्षिप्य ब्राह्मणदक्षिणहस्तं दक्षिणहस्तेन गृहीत्वा वामहस्तेनासनं स्पृशन्—अस्मत्पित्रादि० विश्वेषां देवानां प्रतिसांवस्तरीक श्राद्ध भूर्भुवः स्वः इदमासनं, अत्रास्यतां ॥ इत्यासने देवब्राह्मणमुपवेशयेत् ॥ आसीनाः स्मः ॥ इति प्रतिव० । अपसव्यं । पितृब्राह्मणोपवेशनार्थं दक्षिणाग्र कुशत्रयसहितमासनं स्थपायित्वा तदुपरि तिलान् निक्षिप्य ब्राह्मणदक्षिणहस्तं दक्षिणहस्तेन गृहीत्वा वामहस्तेनासनं पृशन्—अ० गोत्राणां अस्मत्पितृपितामहप्रपितामहानां० वसु रुद्रादित्य स्वरूपाणां प्रतिसांबस्तरिक श्राद्धे भूर्भुवः स्वः इदमासनं, अत्रास्यतां इति पितृब्राह्मणमासने उपवेशयेत् । आसीनाः स्मः इति प्रतिव० । सव्यं ॥ प्रतिद्विजं दीपस्थाप नं कुर्यात् । अपसव्यं ॥ तिलास्तु रक्षंत्वसुरान् दर्भा रक्षंतु राक्षसान् । पंक्तिं वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः । इति द्वारदेशे तिलकुशान् प्रक्षिपेत् ॥ सव्यं । अग्निष्वात्ताः पितृ गणाः प्राचीं रक्षंतु मे दिशं । तथा बर्हिषदः पांतु याम्यां ये पितरस्तथा ॥ प्रतीचीमाज्यपा स्तद्वदुदीचीमपि सोमपाः ॥ ऊर्ध्वतस्त्वर्यमा रक्षेत्कव्यवाडनलोऽप्यधः ॥ रक्षोभूतपिशाचे

भ्यस्तथैवासुरदोषतः । सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ॥ इति यवतिलान् यथालिंगं दिक्षु विकिरेत् ॥

ततस्ताम्रपात्रमुदकेनापूर्य तत्र कुशत्रयतिलगंधपुष्पादि निक्षिप्य--यद्देवा देव हेळनन्देवासश्चकृमा वयम् ॥ अग्निर्मातस्मा देनसोविश्वान्मुञ्चत्वꣳहसः ॥ १ ॥ यदि दिवा यदि नक्तमेनाꣳसिकृमा वयम् ॥ वायुर्मातस्मा देनं० ॥ २ ॥ यदि जाग्रद्यदिस्वप्न एनाꣳसिचकृमावयम् ॥ सूर्यो मातस्मा देनं० ॥ ३ ॥ इति कूष्मांडमंत्रैरभिमंत्र्य--दुष्टदृष्टिनिपातनादिदोषदूषितः पाकः पूतो भवतु । इत्युच्चार्य तज्जलेन सर्वं पाकं प्रोक्ष्य श्राद्धदेशे स्थापितान्श्राद्धोपयोगिपदार्थानपि प्रोक्षेत् । ततः--श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरं ॥ वस्वादींश्च पितॄन् ध्यात्वा ततः श्राद्धं प्रवर्तये । प्रवर्तय इति प्रतिव० ॥ अपसव्यं ॥ सोमस्य नीविरसि विष्णोश्शर्मासि शर्म यजमानस्य ॥ इंद्रस्य योनिरसि सुसस्याः कृषीस्कृधि ॥ १ ॥ इति कुशत्रयं सतिलं गृहीत्वा--निहन्मि सर्वं यदमेध्यमत्र निहन्मि सर्वानपि दानवासुरान् ॥ यक्षाश्च रक्षांसि पिशाचगुह्यका हता मया यातुधानाश्च सर्वे । इति कुशत्रय तिलयुतानां परिधानपुरःस्थितदशानां दक्षिणकटिसलग्नवस्त्र बहिर्भागे संवेष्ट्य गोपनरूपनीवीबंधनं कुर्यात् ॥ सव्यं ॥ आचम्य प्राणामायम्य देशकालौ संकीर्त्य पुण्यतिथौ ॥ अप-

सव्यं ॥अमुकसगोत्राणां अस्मत्पितृपितामहप्रपितामहानां अमुकामुकशर्मणां वसुरुद्रादित्यस्वरूपाणां प्रतिसांवस्तरीक श्राद्धं पुरूरवार्द्रवसंज्ञकविश्वेदेवपूर्वकं सपिंडकं युष्मदनुज्ञया पार्वणेन विधिना अन्नेन हविपा करिष्ये ॥ कुरुष्व इति प्रतिव० ॥ सव्यं ॥ सव्याहृतिकां गायत्रीं जप्त्वा देवब्राह्मणहस्ते उदकं दत्वा पुरूरवार्द्रवसं० देवानामिदमासनं ॥ इत्यासने दक्षिणतः सयवान् प्रागग्रान् दर्भान् दद्यात् ॥ स्वासनं इति प्रतिव० ॥ अपसव्यं ॥ अ० गोत्राणां पितृपितामहप्र० स्वरूपाणां प्रतिसांवस्तरीकश्राद्धे इदमासनं ॥ इत्यासने वामतः सतिलान् दाक्षिणाग्रान् दर्भान् दत्वाऽपो दद्यात् ॥ सव्यं ॥ यवानादाय अस्मत्पित्रादित्रयसंबंधिनः पुरूरवार्द्रवसंज्ञकान् विश्वेदेवान् भवत्सु आवाहयिष्ये ॥ आवाहय प्रतिव० ॥ ततो विप्रदक्षिणजानुमालभ्म विश्वेदेवास आगतः शृणुतामइमꣳहवं ॥ एदम्बर्हिर्निषीदत ॥ १ ॥ इति जप्त्वा ॥ विप्रस्य पुरतः प्रादक्षिण्येन यवानवकीर्य विश्वेदेवाः शृणुतेमꣳहवम्मेये अन्तरिक्षेय उपद्यविष्ठ ॥ येअग्निजिह्वा उतवायजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम् ।१ इति जपेत् ॥ अपसव्यं तिलानादाय अमुकसगोत्रान् अस्मत्पितृपितामहप्रपितमाहान् अमुकामुकशर्मणः वसुरुद्रादित्यस्वरूपान् भवत्सु आवाहयिष्ये ॥ आवाहय इति

प्रतिव० ॥ ततो विप्रवामजानुमालभ्य उशन्तस्त्वा निधीम ह्युशन्तस्समिधीमहि ॥उशन्नुशत आवह पितॄन्हविषे अत्तवे ॥१॥ इति जप्त्वा विप्रस्याग्रतोऽप्रादक्षिण्येनतिलान्विकीर्य॥ आयन्तुनः पितरस्सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ॥ अस्मिन्यज्ञे स्वधया मदन्तोधि ब्रुवन्तुतेऽवन्त्वस्मान् ॥ १ ॥ इति जपेत् ततो वैश्वदेविकमर्घपात्रद्वयं देवाग्रभूमावुपलिप्य दर्भेषु प्रागग्रेपूत्तानं निधाय पवित्रांतर्हित एकैकस्मिन् शंनो देवीर० इत्यप आसिच्य--यवोसि धान्यराजोवा वारुणोमधु संयुतः ॥ निर्णोदः सर्वपात्राणां पवित्रमृषिभिःस्मृतः ॥ इति यवान् प्रक्षिप्य गंधं पुष्पं चतूष्णीं दद्यात् ॥ अपसव्यं पित्रग्र भूमावुपलिप्य दक्षिणाग्रदर्भेषु खड्गादिपात्रत्रयमुत्तानं निधाय दर्भत्रयान्विते एकैकस्मिन्–शंनोदेवीर० ॥ इति पितृतीर्थेनाप आसिच्य ॥ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः॥ प्रत्नमद्भिःपृक्तः स्वधया पितॄन् लोकान् प्रिणाहि नः स्वाहा॥ इतितिलान् प्रक्षिप्य गंधं पुष्पंच तूष्णीं दद्यात् ॥ सव्यं ॥ देवब्राह्मणदक्षिणहस्ते उदकं दत्वा अर्घपात्रस्थपवित्रे दत्वाऽर्घपात्रादर्घं गृहीत्वा यादिव्या आपः पयसा संबभूवुर्या आंतरिक्षा उतपार्थवीर्याः ॥ हिरण्यवर्णा यज्ञियास्तान आपः शिवाः शंस्योनाः सुहवा भवंतु ॥ अस्मात्पित्रादित्रय संबंधिनः पुरूरवार्द्रवसंज्ञका विश्वेदेवा एषवोऽर्घः ॥ इति

दद्यात् ॥ अस्त्वर्घं इति प्रतिव० ॥ अपसव्यं ॥ पितृब्राह्मण-हस्ते उदकं दत्वा पवित्रं दत्वा अर्घपात्रात्सशेषमर्घमादाय यादिव्या आपः० ॥ अमुकसगोत्र अस्मत्पितः अमुकशर्मन् वसुरूप एषतेऽर्घः ॥ इति दद्यात् ॥ अस्त्वर्घं इति प्रतिव० ॥ पुनरपो दत्वा पवित्रं दत्वा द्वितीयार्घपात्रात्सशेषमर्घमादाय यादिव्या आपः० ॥ अमुकसगोत्र अस्मत्पितामह अमुकशर्मन् रुद्ररूप एषतेऽर्घं ॥ इति दद्यात् ॥ अस्त्वर्घं इति प्रतिव० ॥ पुनरपो दत्वा पवित्रं दत्वा तृतीयार्घपात्रात्सशेष मर्घमादाय--यादिव्या आपः० ॥ अमुकसगोत्र अस्मत्प्रपि-तामह अमुकशर्मन् आदित्यरूप एषतेऽर्घः इति दद्यात् ॥ अस्त्वर्घं इति प्रतिवचनं ॥

ततः प्रथमे पितृपात्रे सर्वपित्र्यहस्तास्थितकुशान् निधाय सर्वपात्रस्थ संस्रवान् समवनीय ॥ पितृभ्यः स्थानमसि ॥ इति देवपित्रोर्मध्यभागे न्युब्जं पात्रं निधाय तदुपरि स्वधा-वाचनीयान् त्रीन् कुशान्निदध्यात् । सव्यं ततोदेवद्विजहस्ते उदकंदत्वा एषते गंधइति गंधः, सुगंधिरिति प्रतिवचनम् ॥ इमेयवा इति यवान्,संतुयवाः ॥ श्रीतुलसीभृंगराजशतपत्र-पुष्पाणि, इति तुलस्यादि,सुपुष्पाणि ॥ धारणार्थे इमे यज्ञो-पवीते इति यज्ञोपवीतद्वयं, सूपवीते ॥ फलार्थे पूगफलं इति फलं, सुफलं । आच्छादनार्थे किञ्चिद्व्यावहारिकद्रव्यं, इति

द्रव्यं, स्वाच्छादनं ॥ सर्वार्थे इमौ कुशौ, अस्तु पवित्रं ॥ अस्मात्पित्रादित्रयसंबंधिभ्यः पुरूरवार्द्रवसंज्ञकेभ्यो विश्वेदेवेभ्यः प्रतिसांवत्सरीकश्राद्धे इदं गंधाद्यर्चनं स्वाहानमः॥ अपसव्यं ॥ पितृद्विजहस्ते उदकं दत्वा एषते गंधः,सुगंधिः॥ इमे तिलाः संतु तिलाः ॥ श्रीतुलसीभृंगराजशतपत्रपुष्पाणि, सुपुष्पाणि ॥ धारणार्थे इमे यज्ञोपवीते सूपवीते ॥ फलार्थे पूगफलं, सुफल ॥ आच्छादनार्थे किञ्चिव्द्यावहारिकद्रव्यं, स्वाच्छादनं ॥ सर्वार्थे इमे कुशाः अस्तु पवित्रं ॥ अ०गोत्रेभ्यः अस्मत्पितृपितामहप्रपितामहेभ्यः अ०शर्मभ्यः वसुरुद्रादित्यस्वरूपेभ्यः प्रतिसांवत्सरीकश्राद्धे इदं गंधाद्यर्चनं स्वधानमः । सव्यं । [अत्रावसरे द्विजानां तिलकधारणं] तत आचम्य द्विजाग्रपतितकुशादीन्निरस्य दैविकद्विजाग्रभूमौ नैवारचूर्णेन गौरमृत्तिकया भस्मना गोमयेन वारिणा वा चतुरस्रमंडलं प्रदाक्षिण कृत्वा । अपसव्यं । पैतृकद्विजाग्रभूमौ चतुरस्रमंडलमप्रदाक्षिणं कृत्वा कदळीपात्रं विना पलाशमधूकादिनिर्मितपवित्रपात्रवर्ली मंडलोपरि स्थापयित्वा ॥ सव्यं देवद्विजकरशुद्धिं कृत्वा ॥ अपसव्यं पितृद्विजकरशुद्धिं कृत्वा भस्मना जलेन वा पंक्तिभेदार्थं सव्येनैशानीमारभ्यैशानी पर्यंतं दैवपत्रावलीः ॥ यथा चक्रधरो विष्णुस्त्रैलोक्यं परिराक्षति ॥ एवं मंडलभस्मैतत्सर्वभूतानि रक्षतु ॥ सर्वेषां

पापदृष्टीनां चक्षुर्बध्नाति केशवः ॥ भस्मना मंडलं कुर्या-त्पांक्तिदोषो न विद्यते ॥ इति वेष्टयेत् ॥ अपसव्यं—यथा चक्र० ॥ इति नैर्ऋतीमारभ्य नैर्ऋतीपर्यंतं पित्र्यपत्रावली वेष्टयेत् ततोघृताक्तमन्नमादाय पितृद्विजसमीप उपविश्य आचम्य प्राणानायम्य देशकालौ स्मृत्वा पुण्यतिथौ ॥ अपसव्यं ॥ अ०गोत्राणां अस्मत्पितृपितामहप्रपि०स्वरूपाणां प्रतिसांवत्सरीकश्राद्धे पितृपंक्तिमूर्धन्यब्राह्मणहस्ते अग्नौकरणं करिष्ये ॥ कुरुष्व इति प्रतिव० ॥ अग्नये कव्यवाहनाय स्वाहा इदमग्नये कव्यवाहनाय नमम ॥ सोमाय पितृमते स्वाहा इदं सोमाय पितृमते नमम ॥ इत्याहुतिद्वयं पित्र्य-पंक्तिमूर्धन्यविप्रपाणौ जुहुयात् ॥ विप्रः स्वपाणिस्थमन्नं स्वपात्रे निधाय करशुद्धिं कृत्वाचमनं कुर्यात् ॥ सव्यं मूर्धानं दिवोअरतिम्पृथिव्यावैश्वानरमृत आजातमग्निम् । कविं सम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥ इति देवपात्राभिधारणं कृत्वा ॥ अपसव्यं ॥ मूर्धानं दिवो० इति पितृपात्राभिधारणं कुर्यात् ॥ सव्यं ॥ देवपात्रे हुतशेषं दत्वा । अपसव्यं ॥ पित्र्ये हुतशेषं दद्यात् ॥ सव्यं ॥ तत उपरिस्थितेन न्यङ्मुखेन दक्षिणपाणिनाऽधःस्थितेनोत्तानेन सव्यपाणिना स्वस्तिकाकृतिना दैवपात्रमालभ्य-पृथ्वीते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतञ्जुहोमि स्वाहा

इति जपेत् ॥ अपसव्यं ॥ अधः स्थितेनोत्तानेन दक्षिण-पाणिनोपरिस्थितेन न्यङ्मुखेन सव्यपाणिना स्वस्तिकाकृ-तिना पित्र्यपात्रमालभ्य—पृथ्वीतेपात्रं०जुहोमि स्वधा ॥ इति जपेत् ॥ सव्यं ॥ ततो न्युब्जेन स्वदक्षिणपाणिना देवद्विज-दक्षिणहस्तांगुष्ठमन्नेऽवगाह्य—इदंविष्णुर्विचक्रमे त्रेधानि दधे पदम् । समूढमस्यपाᳫं सुरे ॥१॥ इति जपित्वा । अपहताअसुरारक्षाᳫंसिवेदिषदः । इति यवान् विकीर्य ॥ अपसव्यं ॥ न्युब्जेन स्वदक्षिणपाणिना पितृद्विजदक्षिण-हस्तांगुष्ठमन्नेऽवगाह्य इदंविष्णु० सुरे ॥१॥ इति जप्त्वा ॥ अपहता० षदः ॥ इति तिलान्विकिरेत् ॥ उदकोपस्पर्शः ततोऽन्नानि देवपूर्वं उष्णानि स्विष्टानि परिवेष्ट्य ॥ सव्यं ॥ गायत्र्या देवपात्रस्थमन्नं प्रोक्ष्य तूष्णीं परिषिच्य सव्येन पाणिना पात्रमालभ्य दक्षिणेन यवान् जलंचादाय-इदमन्नं परिविष्टं परिवेक्ष्यमाणं च अस्मत्पित्रादि० विश्वेदेवेभ्यः प्रतिसांवत्सरीकश्राद्धे अस्य ब्राह्मणस्य आतृप्तिभोजनपर्याप्त-ममृतरूपेण संपद्यतां स्वाहा हव्यं नमम ॥ इति जपन् पात्रवामभागे भूमौ क्षिपेत् ॥ पितृपात्रस्थमन्नं गायत्र्या प्रोक्ष्य तूष्णीं परिषिच्य अपसव्यं ॥ सव्येन पाणिना पात्र मालभ्य दक्षिणेन तिलान् जलंचादाय—इदमन्नं परिविष्ट परिवेक्ष्यमाणञ्च अ० गोत्रेभ्यः अस्मत्पितृ० महेभ्यः वसुरु०

स्वरूपेभ्यः प्रति० श्राद्धे अस्य ब्राह्मणस्य आतृप्तिभो० स्वधा कव्यं नमम ॥ इति जपन्पात्रदक्षिणभागे भूमौ क्षिपेत् उदकोपस्पर्शः ।

तत उदङ्मुखास्तिष्ठन्—ईशानविष्णुकमलासनकार्तिकेय वह्नित्रयार्करजनीशगणेश्वराणां । क्रौञ्चामरेंद्रकलशोद्भव कश्यपानां पादान्नमामि सततं पितृमुक्तिहेतून् ॥ गयायै नमः, गदाधराय०, काशिविश्वेश्वराय०, बिंदुमाधवाय०॥ इति नत्वा श्राद्धभूमिं—गयेयं गयेयं गयेयं इति ध्यात्वा ॥ सव्यं ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणाहुतं ॥ ब्रह्मैव तेन गंतव्यं ब्रह्मकर्मसमाधिना ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ अपस० एको विष्णुः०व्ययः ॥ अनेन पितृणां प्रतिसां०श्राद्धीयब्राह्मणभोजनकर्मणा भगवान्पितृस्वरूपी श्रीजनार्दनवासुदेवः प्रीयतां ॥ नममेति संकल्प्य आपोशनार्थमुदकं देवद्विजहस्ते दत्वा सव्येन, पितृद्विजहस्ते अपसव्येन दद्यात् । विप्रा नित्य भोजनवत्परिषेचनं कृत्वा बलिदानवर्जं अमृतोपस्तरणमसि इत्यापोशनं कृत्वा प्राणाहुतीर्गृह्णीयुः ॥ कर्ता च-प्राणाय स्वाहा, अपानाय०, व्यानाय०, उदानाय०, समानाय०, ब्रह्मणे स्वाहा ॥ इति प्राणाहुतिमंत्रान्पठेत् ॥ विप्रा वाङ्नियमाद्युक्तनियमयुक्ता भुञ्जीरन् ॥ ततः कर्तापसव्यसव्याभ्यां पितृपूर्वकं हस्तोदकं दत्वा दशवारङ्गायत्रीं जप्त्वा प्रार्थयेत् ॥

अपेक्षितं याचितव्यं त्याज्यं चैवानपेक्षित। उपविश्य सुखेनैव भोक्तव्यं स्वस्थमानसैः ॥ विद्यमानशाकपाकपदार्थेषु यद्रोचते तद्ग्राह्यं यन्नरोचते तत्त्याज्यं यथासुखं जुषध्वं। जुषामहे इति प्रति०

ततोऽश्नत्सु ब्राह्मणेषु सव्याहृतिकां सप्रणवां गायत्रीं सकृत्त्रिर्वा, राक्षोघ्नीः [कृणुष्व पाजः प्रसितिन्न पृथ्वीय्याहि राजेवामं वाँइभेन ॥ तृष्वीमनु प्रसितिद्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ १ ॥ तवभ्रमास आशु यापतन्त्यनु स्पृश धृषता शोशुचानः। तपूंष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वगुल्काः ॥ २ ॥ प्रतिस्पशोविसृजतूर्णि तमो भवा पायुर्विशो अस्या अदब्धः ॥ योनो दूरे अघशंसोयो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥ ३ ॥ उदग्ने तिष्ठ प्रत्यातनुष्वन्यमित्राँ ओषतात्तिग्महेते ॥ योनोअरातिंसमि धानचक्रेनीचा तन्धक्ष्यतसन्नशुष्कम् ॥ ४ ॥ ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ॥ अवस्थिरा तनुहि यातुजूनाञ्जामिमजामिम्प्रमृणीहि शत्रून् ॥ ५ ॥ ] पित्र्यमंत्रान् [ अग्नयेकव्यवाहनायस्वाहा सोमाय पितृमते स्वाहा। अपहता असुरा रक्षांसिवेदिषदः ॥ १ ॥ येरूपाणिप्रतिमुञ्चमानाअसुरास्सन्तस्स्वधयाचरन्ति ॥ परापुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ २ ॥

अत्रपितरोमादायध्वँयथाभागमावृषायध्वम् ॥ अमीमदन्त पितरोयथाभागमावृषायिषत ॥ ३ ॥ नमोवःपितरश्शुष्माय नमोवःपितरस्तपसे ॥ नमोवःपितरोयज्जीवन्तस्मै नमोवः पितरोरसाय ॥ नमोवःपितरोघोरायमन्यवेस्वधायैवःपितरो नमः ॥ एतद्वःपितरोवासोगृहान्नःपितरोदत्त ॥ ४ ॥ उदायुषा स्वायुषोदजन्यस्युधामाभिः ॥ उदस्थाममृताँऽअनु ॥५॥ आधत्तपितरोगर्भङ्कुमारम्पुष्करस्त्रजम् ॥ यथेहपुरुषोऽसत् ॥ ३ ॥ ऊँर्जव्वहन्तीरमृतङ्घृतम्पयःकीलालम्परिस्त्रुतम् ॥ स्वधास्थ तर्पयतमेपितॄन् ॥ ७ ॥ ॥ सुरावन्तम्बर्हिषदँ्सुवीरँय्यज्ञँ्हिन्वन्ति महिषा नमोभिः ॥ दधानास्सोमन्दिवि देवतासु मदेमेन्द्रँय्यजमानास्स्वर्काः ॥ १ ॥ यस्ते रसस्सम्भृत ओषधीषु सोमस्य शुष्मस्सुरयासुतस्य ॥ तेन जिन्व यजमानम्मदेन सरस्वतीमश्विना इन्द्रमग्निम् ॥ २ ॥ यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय ॥ इमन्तँ् शुक्रम्मधुमन्तमिन्दुँ्सोमँ्राजानमिह भक्षयामि ॥ ३ ॥ यदत्ररिप्तँ्रसिनस्सुतस्ययदिन्द्रो अपिबच्छचीभिः ॥ अहन्तदस्य मनसा शिवेनसोमँ्राजानमिह भक्षयामि ॥ ४ ॥ पितृभ्य०स्वधानमः ॥ ५ ॥ अक्षन्पितरोऽमीमदन्त पितरो तीतृपन्त पितरः ॥ पितरश्शुन्धध्वम् ॥ ६ ॥ पुनन्तुमा० युषा ॥ ७ ॥ पुनन्तुमा० व्यैश्चवे ॥ ८ ॥ अग्नआयूँ्षि०

दुच्छुर्नाम् ॥ ९ ॥ पुनन्तुमादे० पुनीहिमा ॥ १० ॥ पवित्रेण० रनु ॥ ११ ॥ यत्ते० पुनातुमा ॥ १२ ॥ पवमानस्सो० सपुनातुमा ॥१३॥ उभाभ्यां० विश्वतः ॥१४॥ वैश्वदेवी० रयीणाम् ॥ १५ ॥ येसमानास्समनसः पितरो यमराज्ये ॥ तेषाँल्लोकस्स्वधानमो यज्ञो देवेषु कल्पताम् ।१६। येसमानास्समनसो जीवा जीवेषु मामकाः ॥ तेषाᳬश्रीर्मयि कल्पतामस्मिंल्लोके शतᳬसमाः ॥१७॥ द्वेसृती अशृणवम्पितृणामहन्देवानामुतमर्त्यानाम् ॥ ताभ्यामिदंविश्वमेजत्समेति यदन्तरा पितरम्मातरंच ॥१८॥ इदᳬहविः प्रजननम्मेअस्तु दशवीरᳬसर्वगणᳬस्वस्तये ॥ आत्मसनि प्रजासनि पशुसनि लोकसन्यं भयसनि ॥ अग्निःप्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतो अस्मासुधत्त ॥१९॥ ॥उदीरतामवर उत्परास उन्मध्यमाः पितरस्सोम्यासः । असुंय्य ईयुरवृकाऋतज्ञास्ते नोऽवंतु पितरो हवेषु ॥ १ ॥ त्वᳬसोम प्रचिकितो मनीषा त्वᳬरजिष्ठमनुनेषिपंथाम् ॥ तवप्रणीती पितरो न इंदोदेवेषु रत्नमभजंतधीराः ॥२॥ त्वया हिनः पितरस्सोम पूर्वे कर्माणि चक्रुः पवमानधीराः ॥ वन्वन्नवातःपरिधींᳬरपोर्णु वीरेभिरश्वैर्मघवा भवानः ॥३॥ त्वᳬसोम पितृभिस्संविदानोऽनुद्यावापृथिवी आततंथ ॥ तस्मैतइंदो हविषा विधेम वयᳬस्याम पतयोरयीणाम् ॥४॥ बर्हिषदःपितर ऊत्यर्वागिमा वोहव्या

चक्रमाजुपध्वंसम् ॥ तआगता वसा शंतमेनाथा नश्शयोररपो दधात ॥५॥ उपहूताः पितरस्सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ॥ तआगमंतुत इह श्रुवंत्व धिब्रुवंतुतेऽवंत्वस्मान् ॥६॥ आह्वम्पितृन्त्सु विदत्राँ आवित्सिन पातञ्च विक्रमणंच विष्णोः॥ बर्हिषदो ये स्वधया सुतस्य भजंत पित्वस्त इहागमिष्ठाः ॥ ७ ॥ अग्निष्वात्ताः पितरएहगच्छत सदस्सदस्सदत सुप्रणीतयः ॥ अत्ताहवी ष्पि प्रयंतानि बर्हिष्यथा रयिं सर्ववीरन्दधातन ॥ ८ ॥ आयंतु०स्मान् ॥ ९ ॥ येअग्निष्वात्ता येअनग्निष्वत्ता मध्ये दिवस्स्वधया मादयन्ते॥ तेभ्यस्स्वराळसुनीतिमेतांयथा वशंतन्वंकल्पयाति ॥ १० ॥ अग्निष्वात्ता नृतुमतो हवामहे नाराशंसेसोम पीथंयआशुः ॥ तेनो विप्रासस्सुहवा भवंतु वयंस्याम पतयोरयीणाम् ॥ ११ ॥ आच्या जानु दक्षिणतो निपद्येमंयज्ञमभिगृणीतविश्वे ॥ माहिंसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥ १२ ॥ आसीनासो अरुणीना मुपस्थे रयिंधत्त दाशुषे मर्त्याय ॥ पुत्रेभ्यः पितरस्तस्य वस्वः प्रयच्छतत इहोर्जं दधात ॥ १३ ॥ यमग्ने कव्यवाह त्वंचिन्मन्यसेरयिम् ॥ तन्नो गीर्भिः श्रवाय्यन्देवत्रा पनया युजम् ॥ १४ ॥ योअग्निः कव्यवाहनः पितृन्यक्ष दृतावृधः ॥ प्रदुहव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥१५॥ त्वमग्न ईळितो जातवेदो

वाड् ढव्यानि सुरभीणि कृत्वी ॥ प्रादाः पितृभ्यस्स्वधया ते अक्षन्नद्धि त्वन्देव प्रयता हवींषि ॥ १६ ॥ इदम्पितृभ्यो नमो अस्त्वद्यये पूर्वासो य उपरासईयुः॥ ये पार्थिवे रजस्या निषत्तायेवा नून ँ सुवृजनासुविक्षु ॥ १७ ॥ येचेहपितरो येचनेहया ँ श्चविद्मयाँउचनप्रविद्म ॥ त्वंवेत्थयतितेजातवेद-स्स्वधाभिर्यज्ञ ँ सुकृतञ्जुषस्व ॥ १८ ॥ अधायथानःपितरः परासःप्रत्नासोअग्नऋतमाशुषाणाः॥ शुचीदयंदीधितिमुक्थशासःक्षामाभिंदंतोअरुणीरपव्रन् ॥ १९ ॥ उशंत० अत्तवे ॥२०॥ अपाम्फेनेननमुचेश्शिरइंद्रोदवर्तयः॥ विश्वायदजयस्स्पृधः।२१

पुरुषसूक्तं [महस्त्र १६] अप्रतिरथं [आशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनाम् । संक्रंदनोऽनिमिष एकवीरश्शत ँ सेना अजयत्साकमिंद्रः ॥१॥ संक्रंदनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ॥ तदिंद्रेण जयत तत्सहध्वंयुधोनरइषुहस्तेन वृष्णा ॥२॥ सइषु हस्तैस्सनिषंगिभिर्वशीस ँ स्रष्टा सयुधइंद्रोगणेन ॥ स ँ सृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ ३ ॥ बृहस्पतेपरिदीयारथेनरक्षोहा मित्राँअपबाधमानः॥ प्रभञ्जन्त्सेनाः प्रमृणो युधाजयन्नस्माकमेध्यविता रथानाम् ॥ ४ ॥ बलविज्ञायस्थविरः प्रवीरस्सहस्वान्वाजीसहमानउग्रः ॥ अभिवीरोअभिसत्वासहोजा जैत्रमिंद्ररथमातिष्ठगोवित् ॥ ५ ॥ गोत्राभिदंगोविदंवज्रं

बाहुञ्जयंतमज्मप्रमृणंतमोजसा।इम ँ सजाताअनुवीरयध्वमिंद्र ँ सखायो अनुस ँ रभध्वम् ।६। अभिगोत्राणिसहसागाहमानोऽदयोवीरःशतमन्युरिंद्रः। दुश्च्यवनःपृतनाषाळयुध्योऽस्माक ँ सेनाअवतुप्रयुत्सु ।७। इंद्रआसांनेताबृहस्पतिर्दक्षिणा यज्ञः पुरएतुसोमः । देवसेना नामभि भंजतीनांजयंतीनाम्मरुतोयंत्वग्रम् ।८। इंद्रस्यवृष्णोवरुणस्यराज्ञ आदित्यानाम्मरुता ँ शर्ध उग्रम्॥महामनसाम्भुवनच्यवानांघोषो देवानांजयतामुदस्थात् ।९। उद्धर्षयमघवन्नायुधान्युत्सत्वनाम्मा मकानाम्मना ँ सि॥ उद्वृत्रहन्वाजिनाँ वाजिनान्युद्रथानाञ्जयताँयन्तुघोषाः ॥१०॥ अस्माकमिंद्रस्समृतेषु ध्वजेष्वस्माकँयाइषवस्ताजयंतु ॥अस्माकँवीराउत्तरे भवंत्वस्माँउदेवाअवताहवेषु ॥११॥ अमीषाञ्चित्तम्प्रतिलोभयंती गृहाणाङ्गान्यप्वेपरेहि ॥ अभिप्रेहिनिर्दहहृत्सुशोकैरंधेना मित्रास्तमसासचंताम् ॥१२॥ अवसृष्टापरापतशरव्येब्रह्मस ँ शिते ॥ गच्छामित्रान्प्रपद्यस्वमामीषाङ्कञ्चनोच्छिषः ।१३। प्रेताजयतानरइंद्रोवश्शर्मयच्छतु । उग्रावस्संतुबाहवोऽनाधृष्यायथासथ ॥१४॥ असौयासेनामरुतःपरेषामभ्यैतिनओजसास्पर्धमाना ॥ ताङ्गूहततमसापव्रतेनयथामीअन्योअन्यन्नजानन् ॥१५॥ यत्रबाणास्संम्पतंतिकुमारा विशिखाइव ॥ तन्नइंद्रोबृहस्पतिरदितिश्शर्मयच्छतुविश्वाहाशर्मयच्छतु॥१६॥ मर्माणितेवर्मणाच्छादयामिसोमस्त्वाराजामृतेना

तुंवस्ताम् ॥ उरोर्वरीयोवरुणस्तेकृणोतुज यंन्त्वानुदेवाम दंतु ॥१७॥] अन्यानि पवित्राणि रुद्राध्यायादीनि (देवता भ्यः पितृभ्यश्च महायोगिभ्य एवच ॥ नमः स्वाहायै स्वाधा यै नित्यमेव नमोनमः ॥१॥ सप्तव्याधा दशार्णेषु मृगाः कालाञ्जने गिरौ ॥ चक्रवाकाः शरद्वीपे हंसाःसरसि मानसे ॥२॥ तेऽपि जाताःकुरुक्षेत्रे ब्राह्मणा वेदपारगाः ॥ प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽत्र (किमव) सीदथ ॥३॥ अमूर्तानाञ्च मूर्तानां पितृणां दीप्ततेजसां॥ नमस्यामि सदा तेषां ध्यायिनां योगचक्षुषां ॥४॥ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पंचभिरेवच ॥ हूयते च पुनर्द्वाभ्यां समे विष्णुःप्रसीदतु ॥५॥ पंचक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ॥ यत्र यत्र स्मरन्नित्यं पितृणां दत्तमक्षयं ॥७॥ ईशानः पितृरूपेण महादेवो महेश्वरः ॥ प्रीयतां भगवानीशः परमात्मा सदाशि ः ॥६॥ इत्यादीनपि श्रावयेत् ॥)

ततो यथासुखं भुक्तेषु विप्रेषु तृप्तान्ज्ञात्वा पितृदेवपात्र मध्ये ॥ अपसव्यं । गोमयेनोलिप्य तत्र दक्षिणाग्रदर्भत्रयं निधाय सर्वमन्नमुदकेनाप्लाव्य गृहीत्वा-अग्निदग्धाश्च येजीवा येप्यदग्धाः कुलेमम ॥ भूमौ दत्तेन चान्नेन तृप्ता यांतु परां गतिं ॥ अग्निदग्धेभ्योऽनग्निदग्धेभ्याऽस्मत्कुलप्रसूतेभ्य इदं विकिरमन्नं दीयते । इति दत्वा तदुपरि तिलोदकं निषिच्य

हस्तौ प्रक्षाल्य पवित्रे त्यक्त्वा ॥ सव्यं । आचम्य ॥ पवित्रे धृत्वा पुनराचम्य ॥ सव्यापसव्याभ्यां सकृत्सकृदपोदत्वा सप्रणवां सव्याहृतिकां गायत्रीं जप्त्वा—मधुवाता ऋतायते० भवंतुनः॥३॥मधु मधु मधु ॥ इति जप्त्वा अस्मत्पित्रादित्रय० विश्वेदेवाः प्रतिसांवत्सरीकश्राद्धे तृप्ताःस्थ॥तृप्ताःस्म इतिप्रतिवचनं ॥ अपसव्यं ॥ अ०गो अस्मत्पितृपितामह० स्वरूपाः प्रतिसांवरीकश्राद्धे तृप्ताःस्थ।तृप्ताःस्मः। इतिप्र०शेषमंनं।किंक्रियतां। पिंडार्थमुपयुज्यतां । इतिप्र०॥ विप्रा अमृतापिधानमसि इत्युत्तरापोशनं कुर्युः ॥ ततः कर्ताः (व्याममात्रां अरात्निमात्रां वा भुवमुत्सृज्य) द्विजोच्छिष्टसमीपे दक्षिणाभिमुख उपविश्य सव्यं जान्वाच्य दक्षिणाप्रवणं भूभागं गोमयेनोपालिप्य तत्र कुशमूलेन अपहता० पदः ॥ इतिदाक्षिणाग्रां रेखामुल्लिख्याप उपस्पृश्य रेखाग्रे उल्मुकं—येरूपाणि०स्मात् ॥१॥ इति निधाय जलंस्पृष्ट्वा उदपात्रेण दक्षिणसंस्थं रेखायां पितृतीर्थेनावनेजनं कुर्यात् अ०त्र अस्मत्पितः....शर्मन् ...वसुरूप पिंडस्थाने अवनेनिक्ष्व । सगोत्र अस्मत्पितामह....शर्मन्.... रुद्ररूप पिंडस्था० । सगोत्र अस्मत्प्रपितामह....शर्मन्.... आदित्यरूप पिंडस्था० इति । ततः सकृदाच्छिन्नान्दर्भान्रेखायां दक्षिणाग्रमास्तीर्य तदुपरि कापित्थप्रमाणं वर्तुलं सुदृढं मधुसर्पिस्तिलयुतंपिंडत्रयं एकत उद्धृतेनान्नेन विधाय तेष्वेकैकं

गृहीत्वा पितृतीर्थेन दद्यात् । स०त्र अस्मत्पितः....शर्मन्....
वसुरूप एतत्तेऽन्नंॅस्वधानमोनमम ॥ गयायां विष्णुपदे दत्त
मक्षय्यमस्तु तेन गयागदाधरःप्रीतोभवतु ॥ अ०त्र अस्म
त्पितामह....शर्मन्....रुद्र० एत० नमम ॥ गयायां०भवतु॥
अ०त्र अ०प्रपितामह....शर्मन्....आदित्य० एत० नमम ।
गयायां० भवतु ॥ इति, ततः पिंडाग्रभागे लेपभागिनःप्रीयंता
मिति दर्भाग्रे हस्तलेपं निमृज्यात्॥सव्यं अत्रपितरो०यध्वम्॥
इति सव्यावर्तनमुदङ्मुखःश्वासधारणं कृत्वा तथैवावृत्य दक्षि
णाभिमुखः श्वासविसर्जनं—अमिमदंत०षत इतिकुर्यात्॥ अप
स०यं सगोत्र अस्मत्पितः....शर्मन्....व० पिंडस्योपरि प्रत्य
वनेनिक्ष्व॥अ०त्र अ० पितामह....शर्मन्....रुद्र०पिंडस्यो०
अ०त्र अ०त्रपितामह....शर्मन् आदित्य०पिंडस्यो०। इतिपूर्व
वदवनेजनं कृत्वा नीवीं विस्रंॅस्य पिंडमूले निधाय षडंजली
न्कुर्यात् ॥ नमोवः०ष्मोय । नमोवः० पंसे । नमोवः०तस्मै ।
नमोवः० साय । नमोवः०न्यवे । स्वधायै०नमः ॥ इति, ततः
एतद्वःपितरोवासः ॥ इति त्रिणित्रीणि सूत्राणि प्रतिपिंडं
दद्यात् ॥ स०यं गृहान्नःपितरोदत्त ॥ इतिजप्त्वा अपसव्यं
उदायुषा०अनु इत्युत्तिष्ठेत् ॥ उपविश्य स०यं देशकालौ सं-
कीर्त्य अस्मत्कुलाभिवृध्घ्यर्थं पिंडपूजां करिष्ये ॥ पिंडसंस्थाः
पितरः गधं स्वधा ॥ पिंडसं०यवाक्षततिलाक्षतान्स्वधा॥पिंड०

श्रीतुलसीभृङ्गराजशतपत्रपुष्पाणि० ॥ पिंडं० धूपं० ॥ पिंडं० दीपं ॥ पिंड० अपूपनैवेद्यं ॥ पिंड० पूगीफलतांबूलं ॥ पिंड० रजतदक्षिणां स्वधा ॥ एतस्य गंधाक्षतपुष्पधूपदीपनैवेद्य तांबूलदाक्षिणारूपाद्यार्चनाविधेःसंपूर्णतास्तु ॥ अष्टार्चनाविधेः संपूर्णतास्तु इति प्रति० ॥

अत्र विप्राःकरशुध्द्यादि विधायाचमनं कुर्युः ॥ ततः कर्ता देवाग्रभूमौ जलेन सुप्रोक्षितमस्त्वित्यासिच्य देवद्विज हस्ते—शिवा आपःसंतु इतिजलं,संतु शिवा आपः । सौमनस्य मस्तु इतिगंधपुष्पाणि, अस्तुसौमनस्यं । यवाः पांतु, पांतु यवाः । दर्भाः पांतु, पांतुदर्भाः ॥ अपसव्यं उदकेन पित्रग्र भूमौ सुप्रोक्षितमस्त्वित्यासिच्य पितृद्विजहस्ते—शिवाआपः संतु संतुशिवाआपः । सौमनस्य० । तिलाः० । दर्भा० ॥पुनरपो दत्वा अ० त्रणां अस्मत्पितृ०पाणां प्रतिसां० श्राद्धे दत्तमंन मुदकञ्चाक्षय्यमस्तु ॥ अस्त्वक्षय्यं । सव्यं अघोराःपितरः संतु, संत्वघोराःपितरः । गोत्रंनोवर्धतां, वर्धतांवोगोत्रं । दातारोनोऽभिवर्धंतां, अभिवर्धंतांवोदातारः । वेदाश्चनोऽभि वर्धंतां, अभि० वोवेदाः । संततिर्नोऽभिवर्धतां, अभि०वः संततिः । श्रद्धाचनोमाव्यगमत्, माव्यगमदःश्रद्धा । बहु- दे०नोस्तु, अस्तुवोबहुदेयं ॥ सत्या एता आशिषःसंतु ॥ गोत्रंगोत्रस्याभिवृद्धिरस्तु ॥ समस्तपितृणां प्रसादोऽस्तु इति

प्रार्थयेत् ॥ अपसव्यं स्वधावाचनीयान्त्सपवित्रान्कुशान्पिंड पश्चिमेता दक्षिणाग्रान्भूमावास्तीर्य—स्वधां वाचयिष्ये वाच्य तामिति प्रत्युक्ते अस्मत्पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः स्वधोच्यतां, अस्तुस्वधेत्युच्यमाने स्वधावाचनीदर्भेषु प्रति पिंडं—ऊर्जंवहंती० पितॄन ॥१॥ इतिमंत्रावृत्याजलंनिषिंचेत् । ततो न्युब्जं पात्रमुत्तानं कृत्वा यथाशक्तिदक्षिणां दद्याद्ब्राह्म णेभ्यः ॥ सव्यं अस्मत्पित्रादि०विश्वेदेवेभ्यः प्रति०श्राद्धप्रति ष्ठासिध्यर्थमिमां सुवर्णप्रतिनिधिभूतां दक्षिणां यथाविभवं संप्रददे नमम॥अपसव्यं अ०त्रेभ्यः अस्मत्पितृ०हेभ्यः वसु० पेभ्यः प्रति०र्थमिमां रजतप्रतिनिधि०नमम ॥ सव्यं विश्वे देवाः प्रीयंतां, प्रीयंतां वोविश्वेदेवाः ॥ शांतिदाः पुष्टिदास्तु ष्टिदावरदाभवंतु, भवंतु ॥ अंनंचनोबहुभवेत्, बहुभूयात् ॥ अतिथींश्चलभेमहि, लभध्वं ॥ याचितारश्चनःसंतु, संतुवोया चितारः ॥ मायाचिष्मकश्चन, मायाचेथाः ॥ सत्याएताआशि षःसंतु ॥ गोत्रंनोत्रस्याभिवृद्धिरस्तु । समस्तपितॄणांप्रसा० ॥ ततः—नित्यानुष्ठानसिध्यर्थं सर्वदाप्यात्मशुद्धये ॥ पितृमातृ परःसंताः संत्वस्मत्कुलजा नराः॥ इतिललाटे चंदनादिना तिल कंकृत्वा स्त्रीपुत्रादिभिःपिंडनमस्कारंकारयित्वा स्वयंचापिंडान्न मस्कृत्य ॥ अपसव्यं [उखां] अवघ्राय पिंडोत्थानं कृत्वा उखायामेव निदध्यात् ॥ तत्रमंत्राः ॥ त्रीन्त्संमुद्रान्त्समसृप

रस्त्रगान्पस्पार्तिर्वृपभइष्टकानां ॥ पुरीपँवसानस्सुकृतस्यलोके तत्रंगच्छयत्रपूर्वेपरेताः ॥ १॥ अयोध्यामथुरामायाकाशीकाञ्ची अवंतिका । पुरीद्वारावतीचैवसप्तैतामोक्षदायकाः इति ॥तत– उल्मुकं सकृदाच्छिन्नदर्भांश्च अग्नौ प्रक्षिप्य पिंडस्थाने शांति रस्तु, पुष्टिरस्तु, तुष्टिरस्तु इति प्रतिमंत्रं जलं प्रक्षिप्य भोजन- पात्राणि पितृपूर्वकं चालयित्वा सव्यं वाजेवाजेवतवाजिनोनो धनेषुविप्राअमृताऋतज्ञाः ॥ अस्यमध्वः पिबतमादयध्वन्तृप्ता यातपाथिभिर्देवयानैः ॥१॥ इति कुशमूलेन पितृद्विजं पश्चात्ते नैवमंत्रेण देवद्विजंच उत्तिष्ठंतुपितरः सव्येनविश्वेदेवैःसह इति विसृजेत् । ततोगच्छतो विप्रान्पादप्रक्षालनमंडलपर्यंतं–आमा वाजस्यप्रसवोजगम्यादेमेद्यावापृथिवी विश्वरूपे ॥ आमागन्नां म्पितरामातरायुवमामासोमोअमृतत्वायगम्यात् ॥ १ ॥ इत्यनु व्रज्य कर्मपात्रावशिष्टजलधारां पातयन्प्रदाक्षिणीकृत्य पवित्रं त्यक्त्वाचम्य विप्रहस्तेष्वक्षतपुष्पादि दत्वा नियतो वाग्यतो दाक्षिण्याभिमुखास्तिष्ठेत् द्विजा आशीर्मंत्रान्पठेयुः। द्वेसृती०सुंधत्त ॥२॥आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानिच ॥ प्रयच्छंतु तथाराज्यं प्रीतानृणा पितामहाः ॥ सत्या एता आशिषःसंतु गोत्रञ्चोत्रस्याभिवृद्धिरस्तु समस्तापि०स्तु ॥ इति द्विजैराशी र्मंत्रपठनपूर्वकं दत्तमक्षतपुष्पादि शिरसि धृत्वा विप्रान्पादा- भ्यङ्गादिभिः प्रियोक्तिभिश्च प्रतोष्य प्रार्थयेत् ॥ अद्य मे सफ-

लज्ञम भवत्पादाब्जवंदनात् । अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवं ॥ पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः ॥ तत्क्लेशजाताञ्चित्तात्तु विस्मृत्य क्षंतुमर्हथ इति ॥ विस्मृत्य क्ष मामह इतिप्र०॥ वसिष्ठसदृशा विप्राःसूर्यपर्वसमा तिथिः। पितॄणांतु श्राद्धकर्म यदद्य विहितं मया ॥ सत्कारेष्वभवन्न्यूनमासनादिषु तत्र यत् । विप्राणां वचनादस्तु संपूर्णं सकलं हि तत् ॥ सर्वं संपूर्णमस्त्वितिप्र० । आमन्द्रैरिन्द्रहारिभिर्याहिमयूररोमभिः । मात्वाकेचिन्नियेमन्निवन्नपाशिनोतिधन्वेवताँइहि ॥ १ ॥ एवेदिन्द्रंवृषणंवज्रबाहुंवसिष्ठासोअभ्यर्चन्त्यर्कैः । सनस्तुतोवीरवद्धातुगोमद्यूयम्पातस्वस्तिभिस्सदानः ॥ २ ॥ शेषमंनं किं०तां इष्टैःसहभुज्यतां इतिप्र० । गृहमुपेत्य पिंडानप्सु प्रक्षिपेत् गामजंवा प्राशयेत् यस्यस्मृत्या० अनेन प्रति० श्राद्धकर्मणा भग० पितृस्वरूपी श्रीमज्जनार्दनवासुदेवः प्रीयतां ॥ तत्सद्ब्रह्मार्पणमस्तु इदंविष्णु० । ऋचंवाचम्प्र॥२४ तच्छंयोरावृणीमहे ॥१॥ शांतिः । ३ । ततो यज्ञोपवीती पूर्वं प्रतिद्विजं स्थापितान्दीपान्निर्वास्य पवित्रादीनि विसृज्य पादौ प्रक्षाल्य द्विराचम्य विप्रोच्छिष्टानि भूमौ शुचौदेशेऽवटं खात्वा तत्र निक्षिप्याच्छादयेत् ॥ गृहांतरसत्वे रवेरस्तादनंतरमुच्छिष्टप्रतिपत्तिः ॥ ततो गृहं गोमयेनोपालिप्य श्राद्धशेषेणेष्टैः सहभुंजीत ॥ ततः परेऽहनि प्रातः स्नात्वा संध्यां समु-

पास्य श्राद्धांगतर्पणं विधाय पुनः स्नात्वा शेषमाह्निकं कुर्यात् ॥ इति प्रतिसांवत्सरिकश्राद्धपद्धतिः

## २ दर्शश्राद्धम्.

चतुर्दश्यां सायं होमानन्तरं सद्यः पक्षे अमायां प्रातर्होमानंतरं दर्शश्राद्धार्थं वैश्वदेविके द्वौ, पित्र्ये त्रीन्, मातामहे त्रीन्, एवमष्टौ सर्वार्थमेकैकमिति त्रीन्वा विप्रान्निमंत्र्य पाकसिद्ध्युत्तरं तान् समाहूय प्रत्युत्थानस्वागतवचनसत्कारादिना सत्कृत्य च. तैः स्नानङ्कारयित्वा स्वयं स्नातः दर्शश्राद्धाङ्गतर्पणंकृत्वा धृतपवित्रो द्विराचम्य प्राणानायम्य देशकालौ स्मृत्वा पुण्यतिथौ अपसव्यं सगोत्राणां अस्मत्पितृ०ह्यानां ... शर्मणां....वसु० स्वरूपाणां सपत्नीकानां, अ. गो. णां अस्मन्मातामह्मातुःपितामह्मातुःप्रपितामहानां....व० पाणां सपत्नीकानां दर्शश्राद्धं पुरू० संज्ञक विश्वेदेवपूर्वकं सपिंडं अन्नेन हविषा पार्वणविधिना सद्यःकरिष्ये । कुरुष्वेतिप्र० । ततो यजमानो ब्रह्मदण्डमित्यादिशिष्टं सर्वं श्राद्धतंत्रं प्रतिसां० श्राद्धवदविकृतं कुर्यात् ॥ विशेषस्तु, दर्शपदेनोहः प्रतिसां० पदस्थले ॥ सपत्नीकपितृत्रय सपत्नीकमातामहत्रयस्यचोद्देशः ॥इति दर्शश्राद्धं ॥

# ३ मातृश्राद्धम्.

निमंत्रणादि पूर्ववत् ॥ देशकालकीर्तनांते अमुकसगोत्राणांअस्मन्मातृपितामहीप्रपितामहीनां अमुकदानां वसुरुद्रादित्यस्वरूपाणां प्रतिसांवस्तरीकवत् ॥ निमंत्रणादिषु मात्रादीनामुल्लेखः॥आवाहनार्घ्यादि मंत्रेषु साधारणपितृशब्दस्यनोहः इति श्राद्धमंजर्यां॥अत्र मातृश्राद्धेऽपि पितॄनित्येव पाठो नमातृहो मंत्रपठितत्वादिति केचित् ॥ यत्रतु ऊहप्रसक्तिस्तत्प्रदर्श्यते, आवाहने,–गोत्राः अस्मन्मातृपितामहिप्रपितामहीः, दाः, रूपाः भवत्स्वावाहयिष्ये इति॥ अर्घ्यदाने,- गोत्रे मातः दे, रूपे एषतेऽर्घः. गोत्रे, पितामहि, दे, रूपे एष० गोत्रे, प्रपितामहि, दे, रूपे एष० इति ॥ अर्घपात्रासादने, मातृभ्यः स्थानमसीति ॥ अर्चने,–गोत्राभ्यः अस्मन् मातृपीतामहीप्रपितामहीभ्यः, दाभ्यः, रूपाभ्यः इदं गंधाद्यर्चनमिति॥सधवायाः मातुर्मृतायाः स्थाने विप्रपंक्तौ सुवासिनीमपि सति संभव उपवेश्य गोत्रायाः अस्मन्मातुः दायाः रूपाया इदमासनं दत्वा गंधहरिद्राकुंकुमासिंधूरादि दत्वा पुष्पधूपदीपान् समर्प्य आच्छादनार्थें स्त्रीपरिधानयोग्यं नवं श्वेतं सदशं वस्त्रं कुंचुकीसहितं दद्यात् ॥ मातृश्राद्धेऽपि ब्राह्मणेभ्यो यज्ञोपवीतानि दद्यादिति हेमाद्रिः ॥ गोत्रायै अस्मन्मात्रे दायै रूपायै इदमित्यादि ॥ अन्ननिवेदने पात्रालंभादि कृत्वाऽ

चंनवच्चतुर्थ्योल्लेखो मातृणां ॥ सुवासिनीपात्रस्थमन्नस्यापि निवेदनं ॥ मात्रादिद्वयोः सुवासिन्यौ मृतौ द्वे सुवासिन्यौ भोजयेत् ॥ तिसृणां तथात्वे तिस्रः ॥ अशक्तौ सर्वासां स्थान एकां वा सुवासिनीं भोजयेत् ॥ अनेन मम मात्रादीनां श्राद्धे ब्राह्मणसुवासिनीभोजनेन मातृस्वरूपी जनार्दन वासुदेवः प्रीयताम् ॥ इति संकल्पः ॥ तृप्तिप्रश्ने, गोत्राः मातृपितामही प्रपितामह्यः, दाः, रूपाः तृप्ताः स्थ ॥ इति ॥ अवनेजने, गोत्रे, मातः, दे, रूपे, पिंडस्थाने अवनेनिक्ष्व । गोत्रे, पितामहि, दे, रूपे० ।गोत्रे, प्रपितामहि,दे, रूपे० ॥पिंडदाने, गोत्रे, अस्मन्मातः दे रूपे एतत्तेऽन्नं स्वधा गयायां०। अ० गोत्रायै. अस्मत्पितामह्यै दायै,० अस्मत्प्रपितामह्यै,दायै,०प्रत्यवनेजनेऽवनेजनवत् ॥ नमो वः पितर इत्यादिषु यथाश्रुतमेव पाठः ॥ पिंडसंस्थाः पितर इत्यत्र पिंडसंस्था मातर इत्यूहः॥ अक्षय्ये संकल्पवत् षष्ठ्योहः ॥ अघोरा पितर इत्यत्र अघोरा मातर इति ॥ विप्रेभ्यो दक्षिणादानांते सुवासिन्यै दक्षिणां दत्वा सति संभवे कंठसूत्रादि नानालंकारान् दद्यात् ॥उत्तिष्ठंतु मातरो विश्वेदेवैः सह ॥ अनेन मातुः श्राद्धेन भगवान् मातृस्वरूपी जनार्दन० शिष्टमविकृतं पार्वणवत् ॥ सधवाया मातुर्मृतायाः श्राद्धं जीवत्पितृकेणापि सपिंडकं कार्यं ॥ सापत्नमातुरपि तथैवैवमेवापुत्रायाः सापत्नमातुः श्राद्धप्रयोगः ॥

तर्पणं तिलरहितं शुक्लतिलयुतंवा कार्यं । सापत्नमातृश्राद्धे सापत्नमातृशब्देनोल्लेखः । एवं पितामह्यादि श्राद्धेऽपि ॥ पत्नी श्राद्धेतु, अस्मत्पत्नीमातृपितामाहीनामुच्चारणमिति

## ४ विप्रैकत्वे दर्भवटौ च श्राद्धविधिः

अस्मिन्पक्षे पीठादौ शालग्रामशिलां शिवलिङ्गं वा तदुभयं वा प्राङ्मुखं संस्थाप्य तद्दक्षिणतउदङ्मुखं पित्र्यविप्रमुपवेश्य सर्वमविकृत श्राद्धतंत्रं कुर्यात् वैश्वदेविकविप्रनिमंत्रणादिलोपः परिवेषणकाले सर्वस्मादन्नात्पुरुषाहारपरिमितमन्नं पात्रांतरे कृत्वा देवसमीपे निधायान्ननिवेदनकाले तदन्नं गायत्र्याभ्युक्ष्य परिषिच्य पात्रमालभ्य विश्वेभ्यो देवेभ्य इदमंनममृतरूपं परिविष्टं स्वाहा हव्यंनमोनममेति विश्वेदेवोद्देशेन देवाय निवेद्य पित्र्यपात्रस्थान्ननिवेदनादिकृत्वा देवनिवेदितमन्नं ब्रह्मचारिणे दद्यात् ॥ ब्रह्मचारिणोऽसंभवेऽग्नौ दद्यादिति चांद्रिकाकारः ॥ सर्वथा विप्रालाभेच तत्प्रतिनिधित्वेनासनेषु दर्भबटून् निधाय तानेव विप्रान् ध्यायन् सर्वमविकृतं श्राद्धतंत्रं कुर्यात् ॥ ब्राह्मणसंबंधिमंत्रप्रतिवचनानि सर्वं स्वयमेव वदेत् ॥ दर्भबटुर्नाम दर्भसमूहः दर्भसमूहे संख्यानियमोनेति कात्यायनः ॥ अग्नौकरणमिह दर्शादौ गृह्याग्निमतां गृह्या

ग्नौ ॥ तदभावे लौकिकेऽपि ॥ अन्ननिवेदनादौ तु यथा श्रुतमेव निर्देशः ॥ दक्षिणा मन्यस्मै दद्यादिति सिन्धौ ॥ संकल्पितान्नप्रतिपत्तिस्तु अग्नौ ॥ गां वा प्राशयेत् ॥ अप्सुवा प्रक्षिपेत् ॥ आमहेमपक्षयोऽस्तु श्राद्धं निर्वर्त्य तद्द्रव्यं कालांतरे ब्राह्मणाय ब्राह्मणेभ्यो वा दद्यात् ॥ इति ॥

## ५ आमश्राद्धम्.

आपत्तौ प्रवासे तीर्थे अनग्नौ भार्यारजसि इत्येवमादि निमित्तेषु पूर्ववद्विप्रनिमंत्रणादिनियमश्रावणरहितं विधाय पूर्वाह्ण एव कर्ता देशकालौ संकीर्त्य ॥ अपसव्यं ॥ षष्ठ्यंतान् पितॄनुच्चार्य अमुकश्राद्धं सदैवं सपिंडं पार्वणेन विधिनाऽऽमान्नेन हविषा सद्यः करिष्ये ॥ कुरुष्वेति प्रतिवचनं ॥ शिष्टं सर्वं प्रतिसांवत्सरवदविकृतं कार्यं ॥ विशेषस्तु, आवाहनमंत्रे उशंतस्त्वा० हविषे स्वीकर्तवे इति ॥ घृताक्तेनामेनाग्नौकरणं ॥ साग्नेरप्यग्नौकरणमिह पित्र्यद्विजपाणावेव ॥ नांगुष्ठनिवेशनं ॥ पात्रे अन्नाच्चतुर्गुणं द्विगुणं समम् वा आमं परिवेषणीयं ॥ इदमामं परिविष्टं अस्मदित्यादि० अस्य ब्राह्मणस्य अमृतरूपेणसं० इत्यन्ननिवेदनं ॥ ब्रह्मार्पणादि० अनेनामान्नदानेन भगवान्० ॥ नापोशनदानं ॥ अशनाभावाच्च

नाश्वत्सुजपः ॥ आमेनैव विकिरदानं ॥ नोत्तरापोशनं ॥ गायत्रीजपः ॥ मधुमतीः श्रावयित्वा ॥ तृप्तिप्रश्नशेषान्नानुज्ञापनयोर्लोपः ॥ पिंडदाने, एतत्ते आमꣳस्वधा इति ॥ आमेनैवपिंडदानं ॥ गृहासिद्धांनेन सक्तुभिः पायसेन वा यथालाभं तिलैः सह पिंडदानमिति निर्णयकमलाकरः ॥ विसर्जनमंत्रे, वाजेवाजे० देवयानैः इति ॥ श्राद्धांगतर्पणं तत्तच्छ्राद्धधर्मेण॥ इदमामश्राद्धं मासिकसांवत्सरिकसपिंडीकरणगयाश्राद्धमहालयान्वष्टकापूर्वेद्युःश्राद्धभिंनेषु दर्शवृद्धिश्राद्धग्रहणश्राद्धादिषु न भवति-

---

## ६ हिरण्यश्राद्धम्.

तत्र निमित्तानि विधिधर्मःकालः प्रयोगश्चामश्राद्धवत्॥ विशेषस्तु प्रपंच्यते आमान्नेन हविषेत्यत्र हिरण्येनेत्युल्लेखः॥ आमपदस्थाने हिरण्येनोल्लेखः ॥ अग्नौकरणं हिरण्येन ॥ पात्रे चतुर्गुणस्य द्विगुणस्य समस्य वा हेम्नः वितरणं ॥ इदं हिरण्यमिति निवेदनं ॥ हिरण्यदानेनेतिसंकल्पः ॥ हिरण्येन विकिरः । पिंडदानं हिरण्येन । एतत्तेहिरण्यꣳस्वधेति तत्रोहः। अत्रापि पिंडदाने गृहसिद्धान्नादेर्विकल्पः॥ श्राद्धोत्तरं तत्काल एव श्राद्धांगतर्पणं इति । पुत्रजन्मनिमित्ते पक्कामयोरन्नयोः सत्वेऽपि हेम्नैव श्राद्धमिति हेमाद्रिः इति-

# ७ साङ्कल्पिकश्राद्धम्.

प्राग्वन्निमन्त्रणादि कृत्वाऽपराह्णे देशकालौ संकीर्त्य अपसव्यं षष्ठ्यंतान्पितॄनुत्कीर्त्य अमुकश्राद्धं सदैवं सांकल्पिक विधिनाऽन्नेनामेन वा हविषा हिरण्येन वा सद्यःकरिष्ये। इति सं० प्राग्वद्यजमानो ब्रह्मदंडंगृहीत्वेत्यादि विप्रपादप्रक्षालनांते पूर्ववदुपवेश्यावाहनार्घ्यवर्जमासनाद्याच्छादनांतैरुपचारैःपूजयेत्॥ तूष्णीं वाऽवाहनमिह॥ ततोऽग्नौकरणवर्जमापोशनदानांतं कुर्यात्॥ विप्रा बलिदानवर्जविधिना भुञ्जीयुः॥ भोजनांते तृप्तान्ज्ञात्वान्नविकिरणं। तदूर्ध्वं वा मधुमतीः श्रावयित्वा तृप्तिप्रश्नं कृत्वा शेषमन्नं किंक्रियतामित्यादि० इष्टैःसह भुज्यतामितिप्रति०। तत आचांतेषु विप्रेषु विप्रहस्ते शिवा आपः संतु इति जलादि दत्वा अघोराः पितरः संत्वित्यादिकुर्यात्॥ अक्षय्यवाचनपक्षे तत्कृत्वा तांबूलदक्षिणे दत्वा विश्वेदेवाः प्रीयंतामित्यादि॥ ततः कर्मसमर्पणांते विप्रान्प्रति वदेत्॥ कृतस्यामुकश्राद्धस्य संकल्पात्सिद्धिरस्त्विति भवंतो ब्रुवंतु॥ विप्रास्तथाऽस्त्विति वदेयुः॥ श्राद्धांगतर्पणम् तत्तच्छ्राद्धधर्मेण॥ इति सांकल्पिक श्राद्धम्॥



## ८ ब्रह्मार्पणविधिः.

पूर्ववद्विप्रनिमंत्रणादि कृत्वा संकल्पे-पितॄन्षष्ठ्यंतानुच्चार्य अमुकश्राद्धं सदैवं ब्रह्मार्पणेन विधिना सद्यःकरिष्ये ॥ इत्युक्त्वा विप्राणां पादप्रक्षालनं विधाय पीठेपूपवेश्यावाहनार्घ्य-वर्ज्जं देवपितृपूजां विधायाऽन्नं पात्रेषु परिविष्य सावित्र्या प्रोक्ष्य विश्वेभ्यो देवेभ्य इदमन्नं परिविष्टं परिवेक्ष्यमाणश्चास्य ब्राह्मणस्यातृप्तिभोजनपर्याप्तममृतरूपेणसंपद्यतां स्वाहा हव्यं नमोनममेत्येवं तत्तन्नामाद्युच्चारपूर्वकं निवेदयेत् ॥ कव्यं नमो नममेति पित्र्ये विशेषः । ततः ब्रह्मार्पणं ब्रह्महवि० धिना ॥ इत्यादि पितृस्वरूपी जनार्दनवासुदेवः प्रीयताम् ॥ इति संकल्पवाक्यमुच्चार्य भुक्तवद्भ्यो यथाशक्ति तांबूलं दक्षिणां दत्वा, गोविंदं पुंडरीकाक्षं गङ्गां काशीं गयां ततः॥ गदाधरं स्मरेद्भक्त्या श्राद्धसाद्गुण्यहेतवे ॥ इति श्लोकं पठित्वा संकल्पात्सिद्धिरस्त्विति भवंतो ब्रुवंतु इति वाचयित्वा कर्मे-श्वरार्पणं कृत्वा भुंजीत ॥ इति

---

## ९ पिंडप्रदानमात्रश्राद्धम्.

देवलस्तु, द्रव्यविप्रयोरभावे पिंडमात्रं प्रदातव्यमित्याह॥ तत्र विधिः ॥ आदौ षष्ठ्यंतान् पितॄनुच्चार्य अमुकश्राद्धं पिंड प्रदानविधिना करिष्ये इति संकल्पः ॥ ततः प्रायश्चित्तमंत्र-

पठनं ॥ ततो नीवीबन्धनम् ॥ ततः कर्ता भुवं गोमयेनोप-
लिप्य तत्र कुशमूलेन अपहता इति रेखोल्लेखनादि पिंडपूज
नांतं सर्वमविकृतं कृत्वा चंदनादिना ललाटे तिलकं कृत्वा
स्त्रीपुत्रादिभिः पिंडनमस्कारं कारयित्वा स्वयं च पिंडान्नत्वा
प्राचीनावीती उत्तावजिघ्रणादि० पिंडस्थाने शांतिरास्त्वित्यादि
जलप्रक्षेपांते पिंडानप्सु प्रक्षिपेत् ॥ गामजं वा प्राशयेत् ॥
ततो विष्णुस्मरणपूर्वकं कर्मेश्वरार्पणं कृत्वा भुंजीत ॥ इति
पिंडप्रदानमात्रश्राद्धम् ॥

---

## १० एकोद्दिष्टश्राद्धम्.

विप्रान्विप्रं वा निमंत्र्य पाकसिद्ध्युत्तरमाहूय सत्कृत्य
मध्याह्नएव स्नानं कारयित्वा स्वयं स्नात आचम्य पवित्रं धृत्वा
द्विराचम्य प्राणानायम्य देशकालौ स्मृत्वा अपसव्यं गोत्रस्य
अस्मत्पितृव्यस्यामुकशर्मणो वसु० स्य प्रतिसां० श्राद्धं संपिंड
मेकोद्दिष्टविधिनाऽन्नेन हविषा सद्यःकरिष्ये ॥ कुरुष्वेतिप्र०॥
सव्यं ततो यजमानो ब्रह्मदंडं गृहीत्वेत्याद्यर्घपात्रासादनात्प्रा-
क्तनं सर्वङ्कर्म दैवरहितं आवाहनविकिरणवर्जं प्रतिसां०
वत्कृत्वा एकमर्घपात्रं संस्थाप्यैकदर्भपवित्रांतर्हिते अप आसि
च्येत्याद्यर्घदानांतं कृत्वा तत्पात्रं शुचौ देशे पितृभ्यःस्थान
मसीति सँस्रवदानन्युब्जीकरणवर्जं निधायार्चनाद्यग्नौकरण

वर्ज ब्राह्मणभोजनांते तृप्तिप्रश्नं स्वदितमिति कृत्वा सुस्वदितमिति प्र०। शेषान्नस्यानुज्ञापनादिपिंडपूजांते पूर्ववत् ॥ एकः पिंडोऽत्र देयः। ततः सुप्रोक्षिताद्यक्षतदानं अक्षय्योदकदानं उपतिष्ठतामित्यक्षय्यस्थाने ॥ प्रार्थनाद्युदकासेकांतं दक्षिणा दानं॥ न विश्वेदेवाः प्रीयंतामिति प्रैषः,प्रार्थनापि न,तिलकं, पिंडोत्थानादि विसर्जनांतं, अभिरम्यतामिति विसर्जनं। अभिरताः स्मः इति प्रत्युक्तिः॥ अनुगमनादिशिष्टमविकृतं॥ इत्येकोद्दिष्टम्—

## ११ सन्यासिनां श्राद्धम्

देशकालौ संकीर्त्य गोत्राणां अस्मद्ब्रह्मीभूतपितृपितामहप्रपितामहानां शर्मणां रूपाणां प्रतिसांवत्सरिकश्राद्धं सदैवं सपिंडं पार्वणेन विधिनाऽन्नेन हविषा सद्यः करिष्ये। इति संकल्प्य सर्वं पार्वणवदविकृतं कुर्यात्॥ मंत्रव्यतिरिक्तस्थळे सर्वत्र नामोच्चारे ब्रह्मीभूतपदोच्चारणं विशेषः॥ मंत्रेषु पुनरभिध्यानमात्रं॥ एवं श्राद्धं विधाय तदानीमेवाऽपरेद्युर्वा गुरो राराधनं कुर्यात्॥ तत्र प्रयोगः। प्रातःकाल्यं विधिं समाप्य ब्रह्मीभूतस्य गुरोः समाराधने गुर्वर्थे भवद्भिः क्षणः कर्तव्यः॥ ब्राह्मीभूतस्य गुरोः समाराधने परमगुर्वर्थे भवद्भिः क्षणः कर्तव्यः॥ ब्रह्मीभूतस्य गुरोः समाराधने परात्परगुर्वर्थे

भवद्भिः क्षणः कर्तव्यः ॥ ब्रह्मीभूतस्य गुरोः समाराधने परमेष्ठिगुर्वर्थे भवद्भिः क्षणः कर्तव्यः ॥ इति विप्रचतुष्टयं निमंत्र्य [यद्वा ब्रह्मीभूतस्य गुरोः समाराधने विश्वरूपवराचार्यगुर्वर्थे भवद्भिः क्षणः कर्तव्यः । ततो गुरुत्रयमिति वा चतुरो ब्राह्मणान्निमंत्र्य] शुक्लपक्षे, सिद्धिंगतस्य ब्रह्मीभूतस्य गुरोः समाराधने केशवार्थे भवद्भिः क्षणः कर्तव्यः । एवं सर्वत्र नारायणार्थे० माधवार्थे० गोविंदार्थे० विष्णवर्थे० मधुसूदनार्थे० त्रिविक्रमार्थे० वामनार्थे० श्रीधरार्थे० हृषीकेशार्थे० पद्मनाभार्थे० दामोदरार्थे० कृष्णपक्षे-संकर्षणार्थे० वासुदेवार्थे० प्रद्युम्नार्थे० अनिरुद्धार्थे० पुरुषोत्तमार्थे० अधोक्षजार्थे० नारसिंहार्थे० अच्युतार्थे० जनार्दनार्थे० उपेंद्रार्थे० हर्यर्थे० कृष्णार्थे० इति द्वादशविप्रान्निमंत्र्य षोडशयतीन्वा मिश्रितान्वा निमंत्र्य माध्याह्ने तानाहूय तेषां स्नानादि विधाय स्वयं स्नातः शुचिराचम्य पवित्रपाणिः प्राणानायम्य देशकालौ संकीर्त्य ब्रह्मीभूतस्य गुरोः समाराधनङ्करिष्ये इति संकल्प्य गंधाक्षततुलसीकर्पूरमिश्रितजलेन विप्राणां पादप्रक्षालनं कृत्वा तानाचाम्य स्वयं चाचम्य विप्रान्प्राङ्मुखानुदङ्मुखान्वोपवेश्य पादप्रक्षालनोदकं पात्रांतरे गृहीत्वा तत्पात्रं गंधादिभिरलंकृत्य देवसन्निधौ स्थापयेत् ॥ ततो विप्राणां प्रत्येकं गंधपुष्पतुलसीदलैः पादावभ्यर्च्य "आनंदमानंदकरं

प्रसन्नं ज्ञानस्वरूपं निजबोधरूपं ॥ योगींद्रमीड्यं भवरोग-वैद्यं श्रीमद्गुरुं नित्यमहं नमामि ॥ " इति नमस्कुर्यात् ॥ यद्वा, कुशासने प्राङ्मुखानुदङ्मुखान्वोपवेश्य पुरुषसूक्तेन प्रत्यृचं ॐ नमो नारायणाय, इति मंत्रमुक्त्वा विप्रान् कांडानुसमयेन पदार्थानुसमयेन वा पूजयेत् ॥ अथवा गंधपुष्प धूपदीपाच्छादनैः पंचोपचारैरर्चयेत्।ॐ इदंविष्णुः० गुरुभ्योनमः ॥ केशवादिभ्यो नमः आसनाद्यत्र गंधपुष्प-धूपदीपाच्छादानांताः सर्वे उपचाराः परिपूर्णा भवंतु॥अर्चन-विधौ न्यूनातिरिक्ते परिपूर्णताऽस्तु ॥ ततश्चतुरस्राणि मण्ड-लानिकृत्वा तेषु पात्राण्यासाद्याभिघार्य सर्वेषु पात्रेषु पाय-सादिविशिष्टद्रव्यं साज्यं व्यञ्जनसहितं च परिविष्य गायत्र्या प्रोक्ष्य गुरवे इदमन्नं परिविष्टं परिवेक्ष्यमाणं चातृप्तेः स्वाहा हव्यं नमम ॥ एवं सर्वत्र । परमगुरवे० परात्परगुरवे० पर-मेष्ठिगुरवे० केशवाय० नारायणाय० माधवाय० गोविंदा-य० विष्णवे० मधुसूदनाय० त्रिविक्रमाय० वामनाय० श्री-धराय० हृषीकेशाय० पद्मनाभाय० दामोदराय० । कृष्ण-पक्षे, केशवादिस्थाने, संकर्षणाय० वासुदेवाय० प्रद्युम्ना-य० अनिरुद्धाय० पुरुषोत्तमाय० अधोक्षजाय० नारसिंहा-य० अच्युताय० जनार्दनाय० उपेंद्राय० हरये० कृष्णाय० इति अन्ननिवेदनं कृत्वा ॥ ॐ तद्ब्रह्म ॐ तद्वायुः ॐ

तदात्मा ॐ तत्सत्यं ॐ तत्सर्वं ॐ तत्पुरोर्नमः ॥ अंतश्चरति भूतेषु गुहायां विश्वमूर्तिषु ॥ त्वंयज्ञस्त्वं वषट्कार स्त्वमिंद्रस्त्वꣳरुद्रस्त्वं विष्णुस्त्वं प्रजापतिः ॥ त्वं तदाप आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरों । इत्यनुवाकं जपित्वा ब्रह्मार्पणं० इति च पठित्वा अनेन ब्रह्मीभूतस्य गुरोः समाराधनेन ब्राह्मणभोजनेन भगवान्नारायणः प्रीयतां । ॐ तत्सद्ब्रह्मार्पणमस्तु ।

यथासुखं जुषध्वं । अमृतं भुंजीत । अमृतोपस्तरणमसि । ॐ प्राणायस्वाहा इत्यादि ॥ अपोक्षितंयाचितव्यं० भुञ्जानानुपनिषिद्धागान् श्रावयेत् ॥ तृप्तेषु ॐ तद्ब्रह्मेत्यनुवाकं पठित्वा विप्रैरुत्तरापोशनादिशुद्धाचमनांतङ्कारयित्वा पुनरासनेपूपवेश्य तांबूलदक्षिणावस्त्रालंकारादिभिः प्रतोष्य तीर्थपूजां कुर्यात् ॥ यथा गुर्वाराधनांगभूतं तीर्थपूजनं करिष्ये इतिसं–चतुरस्रमंडलगोमयेनोपलिप्य परितो रंग वल्यादिनालंकृत्य मंडले धान्यराशिंकृत्वा तदुपरि पूर्वस्थापितपादोदककलशं संस्थाप्य तत्र-गङ्गादिसर्वतीर्थानि भावयित्वा पुरुषसूक्तेन प्रत्युंचं तीर्थराजायनम इत्युक्त्वा षोडशोपचारैरभ्यर्च्य तत्पात्रं शिरसि धृत्वा ॐ लोकःसरस्वत्यायांत्येषवै देवयानः पंथास्तमेवान्वारोहंत्या क्रोशंतो यांत्यवर्तिमेवान्यस्मिन्प्रतिपद्य प्रतिष्ठांगच्छंति यदा दशशतं कुर्वंत्यथैकमुत्था-

नꣳशतायुःपुरुपः शतेंद्रिय आयुष्येवेंद्रिये प्रतितिष्ठंति यदा-
शतꣳसहस्रं कुर्वत्यथैकमुत्थानꣳ सहस्रसंमितोवा असौ
लोकोऽमुमेव लोकमभिजयंति यदेषां प्रमियेत यदा वाजी-
येरंनथैकमुत्थानं तद्धि तीर्थं ॥१॥ भीपास्माद्वातःपवते ॥
भीषोदेति सूर्यः । भीपास्मादाग्निश्चेंद्रश्च । मृत्युर्धावति पञ्चम
इति ॥ सैषानन्दस्य मीमाꣳसाभवति । युवास्यात्साधुयुवा-
ध्यायकः । आशिष्ठो द्रढिष्ठो बलिष्ठः । तस्येयम्पृथिवी सर्वा
वित्तस्य पूर्णास्यात् । सएकोमानुषआनन्दः । ते ये शतमानुपा
आनन्दाः । सएकोमनुष्यगन्धर्वाणामानंदः । श्रोत्रियस्यचा
कामहतस्य ॥ तेयेशतम्मनुष्यगन्धर्वाणामानंदाः ॥ सएको-
देवगन्धर्वाणामानन्दः ॥ श्रोत्रियस्य० । तेयेशतन्देवगंधर्वा-
णामानदाः ॥ सएकः पितृणां चिरलोकलोकानामानंदः ।
श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतं पितृणां चिरलोकलोका
नामानंदाः ॥ सएक आजानजानांदेवानामानंदः॥२॥ श्रोत्रि
यस्य चाकामहतस्य ॥ तेयेशतमाजानजानान्देवानामानंदाः।
सएकःकर्मदेवानां देवानामानंदः । येकर्मणादेवानापियन्ति ।
श्रोत्रियस्य चाकामहतस्य। तयेशतंकर्मदेवानांदेवानामानंदाः।
सएको देवानामानंदः । श्रोत्रियस्यचाकामहतस्य । तेये
शतंदेवानामानंदाः । सएक इंद्रस्यानंदः ॥३॥ श्रोत्रियस्यचा
कामहतस्य । तेयेशतमिंद्रस्यानंदाः । सएको बृहस्पतेरानंदः।

श्रोत्रियस्यचाकामहतस्य । तेयेशतंबृहस्पतेरानंदाः । सएकः प्रजापतेरानंदः । श्रोत्रियस्यचाकामहतस्य । तेयेशतंप्रजापतेरानंदाः । सएको ब्रह्मणआनंदः । श्रोत्रियस्यचाकामयतस्य ।४। सयश्चायं पुरुषे । यश्चासावादित्ये । सएकः सयएवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रामति । एतं प्राणमयमात्मानमुपसंक्रामति । एतं मनोमयमात्मानमुपसंक्रामति । एतं विज्ञानमयमात्मानमुपसंक्रामति । एतमानंदमयमात्मानमुपसंक्रामति । तदप्येषश्लोको भवंति । यतोवाचोनिवर्तंते । अप्राप्यमनसासह ॥ ५ ॥ आनंदं ब्रह्मणोविद्वान् । नबिभेति कुतश्चनेति । एतँ्हवावनतपति । किमहँ्साधुनाकरवं । किमहंपापमकरवमिति । सएवं विद्वानेते आत्मानँ्स्पृणुते । उभेह्येवैष एते आत्मानँ्स्पृणुते । यएवं वेद । इत्युपनिषत् ॥ ६ ॥ इति जप्त्वा हरिकीर्तनपुरःसरं सहर्षं नृत्यं कृत्वा तत्पात्रं पुनर्मंडले संस्थाप्य चंदनाक्षतपुष्पाणि पूजावशिष्टानि बंधुभिः सह स्वयं धृत्वा विप्रान् प्रदक्षिणीकृत्य आनंदमानंदक० गुरुर्ब्रह्मा० इति मंत्राभ्यां विप्रान् तीर्थराजं च नमस्कृत्य गुर्वर्थविप्रहस्ते पादोदकपात्रं दत्वा तदाज्ञया तत्तीर्थं मंत्रेण गृह्णीयात् । तत्रमंत्रः । अविद्यामूलशमनं सर्वपापप्रणाशनम् । गुरुपादोदकंतीर्थं संसारद्रुमनाशनम् ॥ १ ॥

(पुत्रादिकामनायांतु, शोषणं पापपंकस्य दीपनं ज्ञानतेजसः । गुरुपादोदकंतीर्थं पुत्रपौत्रप्रवर्धनम् ॥ १ ॥ ) ततो विप्रान् प्रणम्य तानन्यांश्च दक्षिणालंकारादिभिः प्रतोष्य सम्मानपुरः-सरंताननुव्रज्य कर्मेश्वरार्पणङ्कृत्वा सुहृद्युतो भुञ्जीत । इत्थं विस्तरेणाराधनाकरणाशक्तौ यथाशक्ति ब्राह्मणानाहूय पादप्रक्षालनपूर्वकङ्गंधादिभिरष्टाक्षरमंत्रेणाभ्यर्च्य ब्रह्मीभूत-गुरूद्देशेन भोजयेत् ॥ सकृन्महालयश्राद्धांतरमप्येवमेवा-राधनम् इति श्राद्धमंजर्यां । अतिसामान्यमिदमाराधनम् । शिष्यः कर्ताचेत् आत्मारामपरमात्मन उद्दिश्य साधुरुरु-संज्ञकदेवयुतम् सव्येन देवधर्मेकम् नांदीश्राद्धवदाब्दिकादि पार्वणश्राद्धङ्कुर्यात् । इति संन्यासिनः श्राद्धम् ॥

---

## १२ विधवाकर्तृकश्राद्धम्.

श्राद्धकर्त्री श्राद्धदिनात्पूर्वदिन एव वा विप्रनिमंत्रणादि श्राद्धीय पित्राद्युद्देशेन यथासंभवं विधाय श्राद्धदिने देश-कालौ संकीर्त्योत्तरीयवस्त्रेण प्राचीनावीतं कृत्वा अमुकसगोत्रा-णां अस्मद् भर्तृतात्पितृतात्पितॄणां अमुकशर्मणां वसुरुद्रादित्य-स्वरूपाणां प्रतिसांवत्सरीकश्राद्धम् सदैवं सपिंडकं पार्वणेन विधिनाऽन्नेन हविषा अद्य करिष्ये इति स्वयं संकल्पं कृत्वा कांचिद्ब्राह्मणं ऋत्विक्त्वे परिकल्प्य तं ब्रूयात् । ममाज्ञया

इदं प्रतिसांवत्सरिकश्राद्धाख्यम् कर्म कुरु इति ॥ कर्ता करिष्यामीति उक्त्वा सर्वमपि मंत्ररहितम् श्राद्धविधिं कुर्यात्॥ तत्र विशेषः अनुज्ञाकर्त्रीं भर्तुरित्यादि तत्तद्विभक्त्यूहेन प्रयोगः ॥ ऋत्विक्कर्मकाले तस्या उपवीतत्वेऽनुज्ञाकर्त्र्याऽपि यज्ञोपवीतिता कर्तव्या ॥ प्राचीनावीतित्वे तयाऽपि प्राचीनावीतिता कार्या ॥ तर्पणं विधवाकर्तृकमेव श्राद्धधर्मेण। श्राद्धकर्तुर्नियमाः ऋत्विजोऽनुज्ञात्र्याश्च समानाः ॥ विधवा वा स्वयमेव वैदिकमंत्ररहितं सर्वं श्राद्धविधिं कुर्यात् ॥ मंत्रसाध्यं कर्मापि तूष्णीं कर्तव्यमेव। वहवस्तु ब्राह्मणद्वारा श्राद्धानुष्ठानेऽपि मंत्ररहितः प्रयोग एवेति। दर्शादौ तु ॥ भर्तृत्रयोहानंतरं स्वपितृत्रयोल्लेखः संकल्पादौ ॥ तीर्थमहालयादौ तु, आदौ स्वभर्तृत्रयम्, ततः स्वपितृत्रयम्, ततः स्वमातृत्रयम्, ततः स्वसपत्नीकमातामहत्रयम्। इति चतुः पार्वणात्मकं श्राद्धम्। षट्पार्वणपक्षे भर्तृपार्वणानंतरं गोत्राणां अस्मत् श्वश्रूतच्छ्वश्रूतच्छ्वश्रूणामसुकादानां मित्यादि स्वश्वश्रूत्रयपार्वणं। ततः स्वपितृत्रयं स्वमातृत्रयं स्वमातामहत्रयं ततः स्वमातामहीत्रयं। इति। सपत्नीसत्वे तस्या अप्यूह एकोद्दिष्टेन। शक्तौ सत्यां स्वपितृव्यादीनामप्येकोद्दिष्टानि कार्याणीति मयूखादौ। विधवा नित्यतर्पणमापि कुर्यात्। यदि विधवा पूर्तादौ वृद्धिश्राद्धं करोति तदा स्वभर्तृत्रयाणां स्वमा-

त्रादितिसृणां स्वपित्रादित्रयाणां स्वमातामहादित्रयाणां सपत्नीकानां वृद्धिश्राद्धं स्वयं प्रतिनिधिद्वारा वा कुर्यात्। विप्राः षड्विंशतिर्दश वा। अन्यदाकरादवसेयः। इति विधवा कर्तृकं श्राद्धम् ॥

## १३ अनुपनीतादिकर्तृकश्राद्धम्.

पित्रोर्दर्शाब्दिकादौ पुत्रांतराभावे कृतचूडोऽकृतचूडो वा पुत्रोऽनुपनीतोऽपि श्राद्धं कुर्यात्। तत्र विधिः प्रयोगश्च विधवा कर्तृकश्राद्धवत्। अनुज्ञाकर्तुः पितुरित्यादिविशेषः। अकृतचूडश्चेत् संकल्पमात्रं कृत्वा सर्वं ब्राह्मणद्वारा कारयेत् ॥ अत्र मंत्रवर्जश्राद्धप्रयोग एव बहुसंमतः। कन्यायाः स्वपितृश्राद्धप्रसक्तावप्येष एव विधिः ॥

## १४ महालयश्राद्धम्

भाद्रपदकृष्णपक्षे प्रतिपदादिदर्शांतम्पञ्चम्यादिदशम्यादि वाऽहरहर्महालयश्राद्धं कार्यं। अत्राशक्तौ पितृमृताहे सकृन्महालयश्राद्धङ्कार्यं। तत्र प्रयोगः। विप्रनिमंत्रणादि प्रथमेऽहनि श्राद्धीयाहनि वा प्राग्वच्छ्राद्धीयपित्राद्युद्देशेन यथासंभवं विधाय श्राद्धदिनेऽपराह्णे देशकालौ स्मृत्वा प्राचीनावीती गोत्राणां अस्मत्पितृ० महानां....शर्मणां....

वसुरुद्रादित्यस्वरूपाणां,गोत्राणां मातृपितामहीप्रपितामहीनां ....दानां व०स्वरूपाणां, गोत्रायाः सापत्नमातुः दायाः वसुरूपायाः, गोत्राणां अस्मन्मातामहमातुःपितामहमातुः प्रपितामहानां शर्मणां रूपाणां, गोत्राणां अस्मन्मातामही-मातुःपितामहीमातुःप्रपितामहीनां दानां रूपाणां, गोत्राया अस्मत्पत्न्याः दायाः व०याः, गोत्रस्य अ० पुत्रस्य शर्मणः सपत्नीकस्य ससुतस्य व० स्य, गोत्रायाः अ०दुहितुः दायाः सभर्तृकायाः ससुतायाः व० याः, गो०स्य अ० पितृ-व्यस्य शर्मणः सप० ससु० व० स्य, गो०स्य अ० मातुलस्य श० सप० ससु० व० स्य, गो०स्य अ० भ्रातुः श० सप० ससु०व०स्य, गो०याः अ०पितृभगिन्या दायाः सभ०ससु० व० या, गो०याः अ० मातृभगिन्याः दायाः सभ० ससु० व०याः,गो०याः अत्मभगिन्याः दायाः सभ०ससु०व०याः, गो०स्य श्वशुरस्य शर्म०सप० ससु०व० स्य, गो०स्य गुरोः श० सप० ससु०व०स्य, गो०स्य अ० आप्तस्य श० सप० ससु० व० स्य सकृन्महालयापरपाक्षिकश्राद्धं सदैवं सपिंडं पार्वणैकोद्दिष्टविधिनाऽन्नेन हविषा सद्यः करिष्ये इतिसंकल्प्य सर्वश्राद्धतंत्रं कुर्यात् । तत्र विशेषः पाद्यनिवेदने—गोत्रा अस्मत्पितृ०महाः शर्माणः रूपा इदंवः पाद्यं इति तिलोदक दानम् ॥ अस्तु पाद्यमितिप्रति० ॥ शन्नोदेवी०॥ १ ॥ इति

शुद्धजलेन पादौ प्रक्षाल्य पितृपादयोरत्रन्वयः इत्यादि पूजनम् । गोत्राः अ० पितृपिता-महाः शर्माणः रूपाः सकृन्महालयापरपाक्षिकश्राद्धे एवःः पादार्घः ॥ अस्तुवः पादार्घं इतिप्र० ॥ एवंसर्वत्र ॥ गोत्राः अ० मातृपितामही-प्रपितामह्यः,दाः,रूपाः ॥ गोत्रे अ०आपत्नमातः,दे,व॥गोत्राः अ०मातामहमातुः पितामहमातुःप्रपितामहाः, र्माणः,ः पाः ॥ गोत्राःअ०मातामहीमातुःपितामहीमातुःप्रपितामह्यः,दाः,पाः॥ गोत्रे अ०पत्नि, दे,व ॥ गोत्र अ०पुत्र,शर्मन्,सपत्नीक ससुत व० प ॥ गोत्रे अ० दुहितः, दे,सभर्तृके,ससुते, व ॥ गोत्र अ० पितृव्य,सप,ससु,व ॥ गोत्र अ० मातुल,न्, सप,ससु, व ॥ गोत्र अ भ्रातः,न्,सप,ससु,व ॥ गोत्रे अ०पितृभगिनि दे,सभर्तृके,स०ते, व० पे ॥ गोत्रे अ०मातृभगिनि दे, सभ, ससु,व ॥ गोत्रे, अ०आत्मभगिनि, दे,सभ,ससु,व-दे॥गोत्र अ० श्वशुर,न्,स० क,स० त,व ॥ गोत्र अ०गुरो, न्, सप, ससु,व । गोत्र अ०आप्त,न्, सप, ससु, व इति ॥आवाहने गोत्रान् अ०पितृपितामहप्रपितामहान् शर्मणः रूपान् भवन्तु आवाहयिष्ये इत्यादि ॥ गोत्राः मातृपितामहीप्रपितामहीः दाः रूपाः ॥ गो० न् अ० मतामहमातुःपितामहमातुःप्रपि-तामहान्,णः,पान् ॥ गोत्राः अ० मातामहीमातुःपितामही-मातुःप्रपितामहीः दाः पाः ॥ इति पित्रादिपार्वणचतुष्टयस्यै-

वावाहनम् ॥ नैकोद्दिष्टवर्गस्य ॥ अर्घ्यदाने,–पित्रादीनामग्र उपलिप्तायां भुवि दक्षिणाग्रदर्भेषु ।पितृवर्गार्थं पात्रत्रयं मातृ-वर्गार्थं पात्रत्रयञ्च दर्भत्रयात्मकपवित्रयुतं निधाय सापत्न-मात्रर्थं एकदर्भात्मकपवित्रयुतमेकमर्घपात्रं निधाय मातामह-वर्गार्थं मातामहीवर्गार्थञ्च प्रत्येकम्पात्रत्रयं दर्भत्रयात्मकपवि-त्रयुक्तं निधाय पत्न्याद्यर्थं प्रत्येकमेकैकमेकदर्भमयपवित्र युक्तं स्थापयेत् ॥ तेषु क्रमेणैकैकस्मिन् शन्नोदेवीरिति मंत्रा-वृत्या अप आसिच्य तिलोऽसीति मंत्रावृत्या तिलांनिक्षिप्य गंधपुष्पंच तूष्णीं दत्वा देवार्घदानानन्तरमपसव्यम् ॥ पितृ-ब्राह्मणहस्ते उदकन्दत्वा पवित्रन्दत्वा अर्घपात्रात्सशेषमर्घ मादाय–यादिव्या आपः० गोत्र अस्मत्पितः शर्मन् वसुरूप एषतेऽर्घः इति दद्यात् ॥ अस्त्वर्घइतिप्र०पुनरपो दत्वा पवि-त्रन्दत्वेत्यादि तत्तद्विभक्त्यूहेनार्घ्यदान कृत्वा प्रथमे पितृपात्रे सर्वपात्रस्थानपःसँस्रवान् समवनीयेत्यादि ॥ अंनदानादौ विभक्त्यूहः,गोत्रेभ्यः,अ० पितृपितामहप्रपितामहेभ्यः, शर्मभ्यः रूपेभ्यः॥ गोत्राभ्यः, मातृपिताम०महीभ्यः, दाभ्यः,पाभ्यः॥ गोत्रायै, सापत्नमात्रे,दायै,पायै॥ गोत्रेभ्यः, मातामहमातुःपि० हेभ्यः, शर्मभ्यः,पेभ्यः।गोत्राभ्यः, मातामहीमातुःपि०हीभ्यः, दाभ्यः, पाभ्यः ॥ गोत्रायै, पत्न्यै, दायै व०यै, ॥ गोत्राय पुत्राय. शर्मणे, सपत्नीकाय, ससुताय, वसुरूपाय ॥ गोत्रायै

दुहित्रे, दायै, सभर्तृकायै, ससुतायै वसुरूपायै. ॥ गोत्राय पितृव्याय, मंणे, सप, ससु. वसु ॥ गोत्राय मातुलाय, मंणे सप, ससु, वसु ॥ गोत्राय भ्रात्रे, मंणे, सप, ससु, वसु ॥ गोत्रायै पितृभगिन्यै,दायै,सभ, ससु.वसु। गोत्रायै मातृभगिन्यै दायै,सभ.ससु,वसु॥गोत्रायै आत्मभगिन्यै, दायै, सभ, ससु, वसु॥ गोत्राय श्वशुराय, मंणे, सप, ससु, वसु। गोत्राय गुरवे, णे, सप,ससु,वसु॥गोत्राय आ.क्षाय, मंणे, सप.ससु,वसु इति॥ पिंडदाने–पितृवर्गार्थं रेखां कृत्वा तत्पश्चान्मातृवर्गार्थं तत्पश्चान्मातामहवर्गार्थं तत्पश्चान्मातामहीवर्गार्थं तत्पश्चात्सर्वैकोद्दिष्टार्थं दीर्घरेखामालिखेत् ॥ प्रत्येकोद्दिष्टमेकैका रेखा पंक्त्या कारेण कार्येति केचित् ॥ प्रतिरेखाम्बर्हिरास्तरणं ॥ ततस्तत्तन्नामाद्युच्चारपूर्वकं पिंडान् दत्वा आसपिंडस्य पुरस्तात् चतुर्भिर्मंत्रैर्मंत्रलिंगोक्तान् पितॄन्नुद्दिश्य चतुरः पिंडान् दद्यात् । तेचमंत्राः ॥ आब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः ॥ वंशद्वयेऽस्मिन् मम दासभूता भृत्यास्तथैवाश्रितसेवकाश्च ॥ मित्राणि सख्यः पशवश्च वृक्षा दृष्टाश्च स्पृष्टाश्च कृतोपकाराः । जन्मांतरे ये मम संगताश्च तेभ्यः स्वधा पिंडमहं ददामि ॥ १ ॥ पितृवंशे मृता यच मातृवंशे तथैव च । गुरुश्वशुरबंधूनां येचान्ये बांधवाः स्मृताः । ये मे कुले लुप्तपिंडाः पुत्रदारविवर्जिताः ॥ क्रियालोपगताश्चैव

जात्यंधाः पंगवस्तथा । विरूपा आमगर्भाश्च ज्ञाताऽज्ञाताः कुले मम ॥ धर्मपिंडो मया दत्तो ह्यक्षय्यमुपतिष्ठतु ॥ २ ॥ उच्छिन्नकुलवंशानां येषां दाता कुले न हि ॥ धर्मपिंडो मया दत्तो ह्यक्षय्यमुपतिष्ठतु ॥३॥ असिपत्रवने घोरे कुंभीपाके च ये गताः ॥ तेषामुद्धरणार्थाय इमं पिंडं ददाम्यहं इति ॥४॥ परेद्युस्तिलतर्पणं । अत्र सापत्नमातृपत्न्यादिएकोद्दिगणस्य द्वित्वादौ तत्तत्संख्यया तत्तन्मंत्राद्यावृत्तिः ॥ इति ॥

---

## १५ अथ नित्यश्राद्धम्.

स्वागतवचसा षट्ब्राह्मणान् द्वावेकं वा पादयोः प्रक्षाल्याचम्य गृहं प्रविश्य कुशांतर्हितेषु पीठेषु उदङ्मुखमुपवेश्य स्वयं प्राङ्मुख उपविश्य प्राणायामं कृत्वा देशकालौ स्मृत्वा प्राचीनावीती दक्षिणाभिमुखः सव्यं जान्वाच्य गोत्राणां अस्मत्पितृपितामहप्रपितामहानां शर्मणां सपत्नीकानां रूपाणां, गोत्राणां अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानां शर्मणां सपत्नीकानां रूपाणां, नित्यश्राद्धं करिष्ये इति संकल्प्यासनं दत्वा गंधपुष्पादिभिः संपूज्य पूर्णतां वाचयित्वा वर्तुलमंडले भोजनपात्राण्यासाद्य सोपस्कारमन्नं परिविष्य गायत्र्या प्रोक्ष्य गोत्रेभ्यः अस्मत्पितृपितामहप्रपितामहेभ्यः शर्मभ्यः सपत्नीकेभ्यः रूपेभ्यः, गोत्रेभ्यः अस्मन्माता

महमातुः पितामहमातुःप्रपितामहेभ्यः, शर्मभ्यः, सपत्नीकेभ्यः, रूपेभ्यश्च इदमन्नं परिविष्टं परिवेष्यमाणं चातृप्तेः स्वधासंपद्यतां कव्यं नममेत्युत्सृज्य ब्रह्मार्पणं० प्राचीनावीती एकोविष्णुः०अनेन नित्यश्राद्धेन भगवान् पितृस्वरूपी जनार्दनवासुदेवः प्रीयताम् ॥ इत्युक्त्वा ब्राह्मणान् भोजयित्वा नमस्कारेण तान् विसर्जयेत् । विभवे सति दक्षिणादानं । नात्र तर्पणं । नित्यश्राद्धमिदं कातीयानां कृताकृतं सूत्रभाष्ययोरदर्शनात्पित्र्यवालेनैव तत्सिद्धश्चेति कण्वकंठाभरणे । इति नित्यश्राद्धम् ॥

---

## १६ अविधवानवमीश्राद्धम्.

जीवत्पिता उक्तापराह्णे आचम्य पवित्रपाणिः प्राणानायम्य देशकालौ स्मृत्वा धूरिलोचनसंज्ञकानां विश्वेषां देवानां (आग्नकोष्ठात्प्राचीनावीतंकृत्वा) गोत्राणां अस्मन्मातृपितामही प्रपितामहीनां दानां रूपाणां अविधवानवमीश्राद्धं सदैवं सपिंडं पार्वणेन विधिनाऽन्नेन हविषा सद्यः करिष्ये इति संकल्प्य पूर्वोक्तमातृश्राद्धवत् सर्वमविकृतं कुर्यात् ॥ यस्यश्राद्धस्य नित्यत्वात्पुरूरवार्द्रवावेवात्र विश्वेदेवौ, श्राद्धोत्तरं तदहरेव शुक्लतिलैस्तर्पणं विधाय बंधुभिर्भुंजीतेति श्राद्धमंजर्यां । सापत्नमात्रेकत्वेऽनेकत्वे वा विप्रानिमंत्रणे वैश्वदेवा-

र्थं द्वावेकं वा विप्रं निमंत्र्य मातृवर्गार्थं त्रीनेकं वा सापत्न मात्रर्थं प्रत्येकमेकैकं एकमेववा निमंत्रयेत् । संकल्पेच मातृपार्वणोद्देशानंतरं सर्वासां क्रमेण षष्ठ्यंतमूहं कृत्वा पार्व-णैकोद्दिष्टविधिना श्राद्धं करिष्ये इति संकल्प्य सकृन्महा-लयोक्तप्रकारेण प्रयोगं कुर्यात् । प्रत्येकमेकैकां सर्वार्थमेकां वा सुवासिनीं भोजयेत् ॥ अथवा मात्रासहैव सर्वासां सापत्नमातृणामूहेन पार्वणे निवेशः । विधिस्तु पार्वणवत् । विप्रनिमंत्रणे सर्वासां मातृणां स्थाने एकं, पितामहीप्रपिता-मह्यो रेकैकं । तत्र विभक्तिविषये उच्चारः, संकल्पादौ सापत्नमात्रेकत्वे, गोत्रयोः, अस्मन्मात्रोः दयोः, वसुरूप-योः, सापत्नमातृणां अनेकत्वे, गोत्राणां मातृणां दानां वसुरूपाणां, गोत्रयाः पितामह्याः दायाः रुद्ररूपायाः, गोत्रायाः प्रपितामह्याः दायाः आदित्यरूपायाः । इत्यु-ल्लेखः ॥ आपिवा? गोत्राणां अस्मन्मातृतत्सपत्नीपितामही-प्रपितामहीनां गंगा यमुना—सरस्वती—कृष्णादानां अनेक त्वेऽपि सपत्नीस्थाने यावंन्त्यः सापत्नमातरः तावतीनां सर्वा-सामूहः कार्यः ॥ संबोधनाविभक्तौ सापत्नमात्रैकत्वे, गोत्रे अस्मन्मातरौ दे वसुरूपे इत्यादि ॥ अनेकत्वे, गोत्राः अस्मन्मातरः दाः वसुरूपा इत्यादि ॥ द्वितीयाविभक्तौ एकत्वे, गोत्रे अस्मन्मातरौ दे वसुरूपे इत्यादि अनेकत्वे,

गोत्राः अस्मन्मातृः दाः वसुरूपाः इत्यादि ॥ चतुर्थीविभक्तौ एकत्वे, गोत्राभ्यां अस्मन्मातृभ्यां दाभ्यां वसुरूपाभ्यां इत्यादि ॥ अनेकत्वे गोत्राभ्यः अस्मन्मातृभ्यः दाभ्यः वसुरूपाभ्य इत्यादि । अर्घ्यदाने-मात्रर्थमेकपात्रं सापत्नमात्रर्थं प्रत्येकमेकैकं पात्रं पितामह्यर्थं एकं पात्रं प्रपितामह्यर्थं एकं पात्रं इति पात्राण्यासाद्य अस्मन्मातः एषतेऽर्घः अस्मत्सापत्नमातः एषतेऽर्घः इति पृथक् पृथक् अर्घ्यदानम् । पिंडदाने, मात्रर्थं सापत्नमात्रर्थं च सर्वा उल्लिख्य एकमेव पिंडं दद्यात्॥ केचित्तु सापत्नमात्रर्थं पृथक् पिंडं दद्यादिति वदंति॥ पितृमरणोत्तरं नेदं श्राद्धं भवति ॥ मृतपत्नीकेनापीदं पत्न्याः कार्यं ॥ अत्र सुवासिनीभोजनमावश्यकं ॥ महालयवदस्यापि यावद्वृश्चिकदर्शनं गौणकालः ॥ विशेपस्त्वाकरादवसेयः ॥ इत्यविधवानवमीश्राद्धम् ॥

## १७ भाद्रपदकृष्णद्वादश्यां संन्यासिनां महालयः

देशकालौ संकीर्त्य गोत्राणां अस्मद्ब्रह्मीभूतपितृपितामहप्रपितामहानां शर्मणां इत्यादि महालयश्राद्धं पार्वणैकोद्दिष्टविधिनेत्यादि सर्वं सकृन्महालयवत्कुर्यात् ॥ तिथ्यंतरे मृतस्यापि द्वादश्यामेव कार्यं ॥

## १८ भाद्र कृ०१४ श्यां शस्त्रादिहतस्य श्राद्धं.

माध्याह्ने देशकालौ स्मृत्वा गोत्रस्य अस्मत्पितुः शर्मणः वसुरूपस्य शस्त्रादिहतस्य भाद्रपदापरपक्षचतुर्दशीश्राद्धं सदैवं सपिंडं एकोद्दिष्टेन विधिनाऽन्नेन हविषा सद्यः करिष्ये इति संकल्प्य प्रागुक्तैकोद्दिष्टविधिना सर्वं कार्यं ॥ तर्पणं तदहरेव । पित्रादित्रयाणां शस्त्रहतत्वे पार्वणपक्षेऽपराह्णे-कार्यं ॥ सकृन्महालयस्तु सर्वपितृद्देशेनामावास्यायां अन्य-स्मिन्वा दिने कार्यः ॥ एकोद्दिष्टे दैवनिषेधेऽपि श्राद्धमिदं सदैवमेव कार्यं ॥ पुरूरवार्द्रवात्रदेवौ नित्यत्वात्कामकाला-विति मयूखे । पित्रादिद्वयोः शस्त्रादिहते एकोद्दिष्टद्वयं ॥ पित्रादित्रयाणामपि शस्त्रादिहते एकोद्दिष्टत्रयं ॥ पार्वणं वा कार्यं । इदं विष-जला-ग्नि-शृङ्गि-दंष्ट्रि-सर्प-श्वापद-पशु-व्याघ्रादिदुर्मरणैर्मृतानां आत्मत्यागिनां उपसर्गमृतानां उद्बधं-नादिमृतानाञ्च कार्यं ॥ असाध्यव्याध्यभिभूतानां विधि-पूर्वकं भृग्वग्न्यंबुमृतानां नैवात्र कार्यं ॥ स्त्रीणामपि शस्त्र-हतत्वे कार्यमेव । सहगमने वैधत्वान्न कार्यं ॥ इति–

---

## १९ आश्विनशुक्लप्रतिपदि मातामहश्राद्धम्.

देशकालौ स्मृत्वा गोत्राणां अस्मन्मातामहमातुःपिता० महानां शर्मणां रूपाणां सपत्नीकानां आश्विनशुक्लप्रतिप

च्छ्राद्धं सदैवं साङ्कल्पिकविधिनाऽन्नेन हविषा सद्यः करिष्ये इति संकल्पः ॥ शिष्टं सर्वं प्रागुक्तसांकल्पिकविधिना कार्यं॥ अत्र पुरूरवार्द्रवौ देवौ। तदहरेव श्राद्धांते सपत्नीकस्य तद्वर्गमात्रस्यैव शुक्लतिलैस्तर्पणङ्कार्यं। अनूपनीतस्याप्यत्राधिकार इति बहवः। मंपिंडकमिदं कार्यमिति चंद्रिका। पिंडराहितमिति कमलाकरः। इदमेव युक्ततरम् ॥ जीवत्पितृकस्य पिंडदाननिषेधस्मरणात्॥ इदञ्जीवत्पितृकेण पञ्चधाविभक्तस्य दिनस्य द्वितीयभागे सङ्गवकाले कार्यमिति शिष्टाः। मृतपितृकेणापि अपराह्णकार्यमिति केचित्। पार्वणाविधानाज्जीवत्पितृकेणाप्यपराह्णे कार्यमिति कौस्तुभ॥ इति—

## २० यात्रारम्भे घृतश्राद्धम्

यात्राञ्चिकीर्षुर्ज्योतिःशास्त्रोक्तप्रकारेण प्रस्थानदिनं निश्चित्य तत्पूर्वेद्युरुपोष्य श्वोभूतेऽपराह्णे देशकालौ सङ्कीर्त्य महालयवत्सर्वान्पितॄनुच्चार्य अमुकयात्रां कर्तुं तदंगत्वेन विहितं समस्तपितॄनुद्दिश्य घृतश्राद्धंकरिष्ये इति सं० ॥ पुरूरवार्द्रवसंज्ञकविश्वेदेवार्थं द्वावेकं वा ब्राह्मणं निमंत्र्य पित्राद्यर्थं सकृन्महालयवन्निमंत्र्याघ्यावाहनवर्जं परिवेषणांतं कुर्यात् ॥ अग्नौकरणं कृताकृतं। करणे घृतेनैव ॥ अन्ननिवेदने—इदमन्नमित्यत्र इदं घृतमिति प्रयोगः ॥ अन्यत्सर्वं

वक्ष्यमाणतीर्थश्राद्धवत् । भुक्त्वा देशकालौ संकीर्त्य श्री परमेश्वरप्रीत्यर्थ-ममुकयात्रां करिष्ये इति संकल्प्य गणेशं कुलदेवतादीन् ब्राह्मणान् वृद्धान् साधूँश्च संपूज्य नत्वा पितृँश्च नमस्कृत्य विप्राज्ञया सुमुहूर्ते सुमुखश्चेत्यादि मंत्रान् पठित्वा शुभशकुनदर्शनपूर्वकं प्रस्थाय ग्रामं प्रदक्षिणी-कुर्वन् गच्छेत् तद्दिने क्रोशादर्वाग्ग्रामांतरं गत्वा तत्रैव वसेत् । घृतश्राद्धदिने श्राद्धानन्तरं सुमुहूर्तालाभे श्राद्धो-त्तरादिने प्रस्थानं कुर्यात् ॥ ततो मार्गे प्रतिदिनं प्रातःस्नात्वा प्रातःसंध्यां नित्यक्रियांच कृत्वोपोषितः शुचिर्ब्रह्मचर्यादि-नियमवान्प्रतिग्रहवर्जितश्चांडालादिस्पर्शादिरहितः सान्निवास-स्थलं गत्वा तत्र माध्याह्निकस्नानसंध्याभोजनादिकं विधाय काले संध्यां कृत्वा ततैव वसेत् । एवम्प्रतिदिनंगच्छेदिति—

---

## २१ तीर्थश्राद्धविधिः

तीर्थप्राप्तिदिनात्पूर्वेऽहनि प्राप्तदिनेवोपोष्य कर्पटीवेषं विधाय पादुकायानादिपरित्यज्य पादचारी तीर्थं दृष्ट्वा साष्टांगम्प्रणम्य तीर्थसमीपमेत्याक्षतगंधपुष्पफलतांबूलहिर-ण्यादियुक्तमञ्जलिं 'अमुकतीर्थायनमः' इति दत्त्वा तत्रस्था-न्द्विजाँश्च साष्टांगत्वेन प्रणम्य तदनुज्ञया शरीरमलापकर्षण-स्नानं तूष्णींकृत्वाऽऽर्द्रवासा ब्रह्मदंडार्थं यथाशक्तिहिरण्यं

ब्राह्मणानामग्रे निधाय समस्तसम्पदिति श्लोकचतुष्टयम्पठ न्ब्राह्मणान्प्रादक्षिणीकृत्य साष्टांगं प्रणमेत् । ततः 'सर्वे धर्मविवेक्तारः०' इति सार्धश्लोकद्वयेन सम्प्रार्थ्य मामनुगृह्णंतु भवंत इति वदन्विप्रानुमत्या यथाशक्ति प्रायश्चित्तं संकल्पपूर्वकं यथाशक्ति विधाय देशकालौ स्मृत्वा मम समस्तपापक्षयार्थं अस्मिन्नमुकतीर्थे वपनं कारयिष्ये इति सं० 'आत्मनः शुद्धिकामस्य पितॄणां तृप्तिहेतवे । वपनं कारयाम्यद्य हे गंगे [तीर्थ] [सिंधो] तव संनिधौ' ॥ यानि कानिच पापानि ब्रह्महत्यासमानिच । केशानाश्रित्य तिष्ठंति तस्मात्केशान्वपाम्यहं ॥ इतिमंत्रमुक्त्वा प्राङ्मुख उदङ्मुखो वा कक्षोपस्थवर्जं श्मश्रुकेशलोमनखानि वापयेत् इदं केशवापनं शिखामारभ्याधःस्थात्कार्यं । एवं वपनं विधाय शुद्ध्यर्थं तूष्णीं स्नात्वा 'आयुर्बलं यशोवर्चः० इति प्रार्थितेन द्वादशांगुलेनापामार्गादिदंतधावनकाष्ठेन' 'मुखदुर्गंधिनाशाय० इति दंतान्विशोध्य द्वादशगडूषान्कृत्वाचम्य प्राणानायम्य देशकालौस्मृत्वा महासंकल्पपूर्वकं स्वसूत्रोक्तविधिना स्नात्वा देवर्षिपितृतर्पणं कुर्यात् । ततो यथोक्तकाले देशकालोत्कीर्तनांते प्राचीनावीती पित्राद्यासांतान् पितॄन् सकृन्महालयवदुच्चार्य तीर्थश्राद्धं सदैवं सपिंडं पार्वणैकोद्दिष्टविधिनाऽन्नेन हविषा सद्यः करिष्ये इति संकल्पः। अर्घ्यावाहनविप्रांगुष्ठनिवेशन तृप्तिप्रश्न विकिरवि-

सर्जनवर्जं सकृन्महालयवत्प्रयोगः ॥ महालयपदस्थाने तीर्थ-पदोच्चारणं ॥ महालयवत् क्षेत्रवासिनां अन्येषां च विप्राणां निमंत्रणमत्र । धूरीलोचनौ पुरूरवार्द्रवौ वात्र देवौ । पिंडानां प्रक्षेपस्तीर्थजल एव । तीर्थश्राद्धांगतर्पणं श्राद्धदिने श्राद्धात्प्रागेव । तीर्थश्राद्धानंतरं यथाविभवं तीर्थपूजां विधाय तदुद्देशेन यथाशक्ति ब्राह्मणसुवासिनींश्च भोजयित्वा दीनानाथान्परितोष्य स्वयं सुहृद्युक्तः श्राद्धशेषं भुंजीत ॥ तद्दिने उपवासपक्षे श्राद्धशेषमवजिघ्रेत् । ततो द्वितीयादिदिने नित्यवत्स्नानतर्पणतीर्थपूजनब्राह्मणभोजनादि यथाशक्ति कुर्यात् ॥ एवं यात्रां कृत्वा प्रत्यागत्य सुमुहूर्ते गृहं प्रविश्य पूर्वोक्तघृतश्राद्धवत् घृतश्राद्धं कुर्यात् ॥ संकल्पे—सर्वान्पितॄनुद्दिश्य अमुकतीर्थात्प्रत्यागमननिमित्तं घृतश्राद्धं करिष्ये इति विशेषः ॥ अन्यत्समानं अत्र केचिद्दध्ना श्राद्धमिच्छंति॥ तत्पक्षे संकल्पादौ घृतपदस्थाने दधिपदस्योहः ॥ अत्र प्राधान्यं दध्न एव ॥ अन्यदपि व्यंजनत्वेन देयं इति तीर्थश्राद्धम् ॥



## २२ अथ षण्णवतिश्राद्धानि.

अमाः प्रतिमासं सर्वाः कृष्णपक्षांतिमास्तिथयो द्वादश ॥ १२ ॥ इदममाश्राद्धं सपिंडकं ॥ अपराह्णःकालः ॥ इदञ्च मलमासे कार्यं ॥ विधिस्तु प्रागुक्तः । अमादर्शौ अनर्थांतरौ। युगादयश्चतस्रः, १ माघकृष्णामा २ भाद्रपदकृष्णत्रयोदशी३ वैशाखशुक्लतृतीया ४ कार्तिकशुक्लनवमी [illegible] ॥ इदं श्राद्धमपिंडकम् । सांकल्पिकविधिः ॥ शुक्लपक्षे पूर्वाण्हः कालः॥ असंभवेपराण्हः ॥ पूर्वाह्णोनाम द्वेधा विभक्तादिनपूर्वभागः॥ कृष्णपक्षगानामपराण्ह इदम्मलमासेऽपि कार्यम् ॥ मन्वादयश्चतुर्दश, १ चैत्रशुक्लतृतीया २ चैत्रशुक्लपूर्णिमा ३ ज्जेष्ठशुद्धपूर्णिमा ४ आषाढशुक्लैकादशी ५ आषाढशुद्ध पूर्णिमा ६ श्रावणकृष्णाष्टमी७भाद्रपदशुक्लतृतीया८आश्विनशुद्धनवमी ९ कार्तिकशुद्धद्वादशी १० कार्तिकशुद्धपूर्णिमा ११ पौषशुक्लैकादशी १२ माघकृ०सप्तमी १३ फाल्गुनशुक्लपौर्णिमा १४ फाल्गुनकृष्णामा इति ॥ अत्र सर्वनिर्णयो युगादिवत् ॥ इदम्मलमासेऽपि भवति ॥ संक्रांतयो द्वादश मेषादयः ॥ अत्रापि युगादिवदेव सर्वनिर्णयः ॥ श्राद्धकालनिर्णयस्तु, संक्रांतिनिर्णयोक्त एव ॥ मलमासे संक्रांत्यसंभवाच्छ्राद्धस्याप्यसंभवः ॥ वैधृतयस्त्रयोदश, व्यतीपातास्त्रयोदश। अत्रापि निर्णयो युगादिवदेव ॥ श्राद्धकालः कुतपः ॥ महा-

लयाः भाद्रपदापरपक्षगताः पञ्चदशातिथयः प्रौष्ठपदीच आश्विनशुक्लप्रतिपत् तिथिवृद्धिर्वेति षोडश ॥ अत्र विहित-निर्णयः प्राक्प्रपञ्चित एव ॥ अपराण्हःकालः ॥ मलमासे तु न भवति । अष्टकाश्चतस्रः, १ मार्गशीर्षकृष्णाष्टमी २ पौषकृष्णाष्टमी ३ माघकृष्णाष्टमी ४ भाद्रपदकृष्णाष्टमी इति॥ इदं श्राद्धं सापिंडकम् ॥ अपराह्णःकालः ॥ मलमासे न भवति॥ अन्वष्टकाश्चतस्रः, १ मार्गशीर्षकृष्णनवमी २ पौषकृष्ण नवमी ३ माघकृष्णनवमी ४ भाद्रपदकृष्णनवमी इति ॥ इदं श्राद्धं सपिंडकम् ॥ अष्टम्यनुरोधेन श्राद्धकालः । मल-मासे न भवति । पूर्वेद्युःश्राद्धानि, १ मार्गशीर्षकृष्णसप्तमी २ पौषकृष्णसप्तमी ३ माघकृष्णसप्तमी ४ भाद्रपदकृष्णसप्तमी इति चत्वारि ॥ अत्र विहितनिर्णयोऽन्वष्टकावत् ॥ इति षण्णवतिश्राद्धानि ॥

---

## २३ वृद्धिश्राद्धं

तच्चास्माभिः संस्कारमार्तण्डे प्रपंचितः ॥ श्राद्धान्तराणि च ग्रन्थान्तरादवसेयानि ॥



## २४ ग्रन्थोपसंहृतिः

योऽनेन विधिना श्राद्धं कुर्यादै शांतमानसः। व्यपेतकल्मषो नित्यं याति नाव

न संति पितरश्चेति कृत्वा मनसि यो नरः। श्राद्धं न कुरुते तत्र तस्य रक्तं

तस्माच्छ्राद्धं नरैर्भक्त्या शाकैरपि यथाविधि। कुर्वीत समये श्राद्धं कुले कश्चिन्

समातेन विधिना श्राद्धं कृत्वा स्वविभवोचितं। ब्रह्मस्थावरपर्यंतं जगत्प्रीणाति

श्राद्धात्परतरं नान्यच्छ्रेयस्करमुदाहृतम्। इति धर्मं घोषमाहुर्आर्ते निगमे

## २५ ग्रन्थसमाप्तिः

वेणुग्रामपुरप्रांते कर्णाटविषये महान्॥ मुरगांडाभिधः खेटः प्राच्यो नवं

तत्स्थः श्री श्राद्धमार्तण्डमेनं श्रीवत्सगोत्रजः। प्राणेशीस्त्विजवर्यो हि विमल

कुलद्वयानंददश्रीकृष्णांबागर्भसम्भवः। कण्वशाखी तु मार्तण्डसोमयाजी

विविच्य सूत्रभाष्यादिमूलग्रन्थाननेकशः। स्फुटं प्रयोगसौकर्यसंपत्त्यै च

न ह्यमूलं किञ्चिदपि ग्रन्थेऽस्मिन् लिखितं मया। अनेन प्रीयतां देवो भगवा

श्री सर्वमङ्गलाधीशकृपया जीयतामसौ। विद्वज्जनमनःकंजं रञ्जयन्मुक्ति

इति श्री मार्तण्डसोमयाजिविरचितः। श्राद्धमार्तण्डः समाप्तः।

॥ श्री सच्चिदानन्दार्पणमस्तु ॥